# देवगोष्ठी

संचालकः

श्री रामनाथो वेदालंकारः

सम्पादकः




...तुर्दशीयः)

उपसम्पादकः

व्रजेशकुमारः

(द्वादशीयः)



गीर्वाण-वाणी-रस मज्जनेन
देवोपमं छात्र जनं करोति ।
काव्ये च या प्रेम परं तनोति
सा 'देवगोष्ठी' जयताल्लसन्ती ॥

संस्कृतोत्साहिनी-परिषदः →

— प्रमुखं पत्रम् —

# देवगोष्ठी

ख्रीष्टाब्दः १९६०

प्रथमः अङ्कः

विजय-दशमी

३०-९-६०

# देवगोष्ठी



## अनुक्रमणिका

# देवगोष्ठी

देवगोष्ठी

# धन्यवादः

सुभाष:

स्मराम्यहं नाम विभुं पवित्रम्,
साफल्यदं सच्चिद्‌वमात्मरूपम्।
कृपाम्बुभिर्यस्य रसाभिषिक्ता,
प्रकाश्यते मञ्जुल "देवगोष्ठी"॥ १

सुकीर्त्यते साधु यशो गुरूणां,
येषां प्रसादात् सहयोगतश्च।
प्रारभ्यते पत्रमिदं सुसारं,
त्रैमासिकं चारुकलाभिरम्यम्॥ २

ददाम्यहं धन्यवचः सविनयः
स्नेहार्द्र-सन्मंगल-कामनाभिः।
येषां सुयोगैश्च बहुप्रशस्यै,
रारभ्यते पत्रमिदं समोदम्॥ ३

# देवगोष्ठी

## देवगोष्ठी-प्रशस्तिः

ऋषिभिर्मुनिभिर्गीता, पुनीता स्वर्गसंक्रमा।
प्रशस्ता देव विप्राणां, देवगोष्ठी प्रवर्तताम्॥१॥

आत्मनः कर्म धर्मञ्च, शिक्षयन्ती जनान् सदा
शास्त्रालोचन भूयिष्ठा देव गोष्ठी प्रवर्तताम्॥२॥

वैदिकी सभ्यता नित्यं, धर्मश्च प्रसरेदिह।
इत्युद्देश्य प्रवृत्ता सा देव गोष्ठी प्रवर्तताम्॥३॥

प्रसारन्ती सुधास्पन्दं, फलतः सुखदायिनी।
ज्ञान विज्ञान निःश्रेणी देव गोष्ठी प्रवर्तताम्॥४॥

यस्यां नित्यं समभ्यासः पाटवं संस्कृतो क्तिषु।
जायते वर्णिनां साऽत्र देव गोष्ठी प्रवर्तताम्॥५॥

बिबुध प्रवरो-
— धर्मदेवो वेदवाचस्पतिः



देवगोष्ठी



# दयानन्द स्तुतिः

समर्पितं जीवनमेव सर्वम्,
परोपकारेऽभ्युदये समेषाम्।
नैच्छत् कदाचित् स्वसुखं न कीर्तिं,
वन्द्यः स मे श्लाघ्यतमो महर्षिः॥

निखाय पाखण्ड विखण्डिनं ध्वजम्,
चचार वेदारिषु योऽहि नित्यशः।
पराजिता येन समस्त नास्तिकाः,
कुतो न वन्द्यः स महर्षिराड् गुरुः॥

सुभाषचन्द्रः

देवगोष्ठी

# प्रजातन्त्रप्रणाली श्रेयसी

– धर्मवीरः –

एतस्मिन् वैज्ञानिक-युगे ह्येतैः आविष्कारैः एतादृशी अवस्था उत्पन्ना वर्तते यत् आविष्कृतानां वस्तूनां कारणात् लोकानां राष्ट्राणाञ्च कल्याणमकल्याणं द्वयमपि भवितुं शक्नोति ! एतादृश्यामवस्थायाम् एतादृश्याः प्रणाल्याः आवश्यकता वर्तते यया अस्यां दुष्करावस्थायामपि सुचारु-रूपेण प्रजायाः राष्ट्रस्य च शिवं भवेत् ! अतो विचारणीयमिदं वर्तते यत् कया शासन प्रणाल्या लोकानां हितं भविष्यति !

# देवगोष्ठी

विचारानन्तरमस्माभिः ज्ञायते यत् प्रजातन्त्र-प्रणाल्येव अस्मिन् युगे लोक-संरक्षणाय राष्ट्रोत्थानाय च उचिता विद्यते ! यतोहि अस्यां प्रणाल्यां शासकाः स्वेच्छाचारिणो न भवन्ति यथा राजतन्त्र-प्रणाल्याम् ! राजतन्त्र प्रणाल्यां राजा स्वेच्छाचारी भवति अतस्तत्र राज्ञः विचारा एव सर्वोपरि वर्तन्ते ! परं प्रजातन्त्र प्रणाल्यां प्रजा-विचाराणामादरो भवति ! यतोहि नृपतिः स्वात्मानं एकतमं प्रजासु मन्यन्ते !

प्रजातन्त्र-प्रणाली एव एतादृशी वर्तते यस्यां शासिताः जना अपि स्वान पराधीनान् न मन्यन्ते ! शासितेष्वपि तेषु समानताया भ्रातृत्व भावनायाश्च विचारो निवसन्ति !

# देवगोष्ठी

आसीत् यत् -- " The Government of the peo-
for the people & by the people.

मम मनसि तान् भूपान् प्रति आदर बुद्धि
वर्तते ये खलु: राज्य तन्त्र प्रणाल्यनुसारं
राज्यं अकुर्वन् एवमेव देशस्य कल्याणञ्च ।
यथा सम्राट् चन्द्रगुप्त प्रियदर्शी अशोक प्रभृतयः ।
न ननु अत्र कोऽपि सन्देहो यत् इमे राजानः
स्व समये लोकानां देशस्य च हिताय कार्यं
न कृतवन्तः । यस्मादेव कारणात् राज्यतन्त्र
प्रणाली समुचिता विद्यते एवमपि वयं वक्तुं न
प्रभवामः । यतो हि चन्द्रगुप्ताशोक समये या
उन्नति रभूत् देशस्य सा तु सांसा सुशासन
कारणादेवाभूत् । यां पश्चाच्च पश्यामो यत् --
हर्षवर्धन मृत्युरनन्तर देशस्य अकल्याण

# देवगोष्ठी

अनेनैवकारणेन कविवरेण "जायसी महोदयेन" उक्तमस्ति यत् - लोकतन्त्र प्रणाली सा वर्तते यस्यां अधिकाराणां, परिस्थितयः जनभावनायाश्च समानता भवति! इयं प्रणाली वर्ग हीना भेद भाव रहिता च वर्तते! अनेन स्पष्टं प्रतीयते यत् अस्यां प्रणाल्यां जनैः समानाधिकाराणां प्रयोगः क्रियते!

प्राचीन कालस्य विदुषो डीमतः "अरस्तु महोदयस्य" विचारानुसारं "प्रजातन्त्र प्रणाल्यास्ता सर्वं एवमाति" यदा शासन प्रणाल्याः उत्तरदायित्वं अनेकेषां लोकानां हस्तेषु भवति तदा इयं प्रणाली भवति!" परमाधुनिक विचारानुसारं प्रजा स्वयं एव शासनं करोति! सर्वकारास्तु प्रजायाः विचाराणां प्रतीकमात्रो भवति! लिंकन महोदयेन निगदितं

# देवगोष्ठी

भेद अभूत्! चेत् प्रजातन्त्र प्रणाल्यानुसारं नृपः भविष्यति तर्हि एतादृशावस्था उत्पन्नैव न भविष्यति! यतोहि एकस्य मृत्योरनन्तरम् अन्यः विद्वान् राजसिंहासनम् लप्स्यति! परं राजतन्त्र प्रणाल्यामेवं न वर्तते! तत्र तु भाग्यवशात् मतिमान् राजा भविष्यति तर्हि कल्याणं भवेत् न तु मूर्ख राज हेतो अधः पतनमेव! परं प्रजातन्त्र प्रणाल्यां तु निर्वाचकैः निर्वाचितः श्रेष्ठ पुरुष एव राज्यं करोति! वेदेष्वपि लिखितमपि वर्तते यत् शासकाः प्रजाभिः निर्वाचिता एव भवेयुः! यदि शासकाः अयोग्याः वर्तन्ते तर्हि प्रजास्तान् एव पदात् अधिकारात् दूरी कर्तुं अपि समर्थाः वर्तन्ते! —

" आत्वाहार्षमन्तरेधि ध्रुवस्तिष्ठा विचाचलिः।

# देवगोष्ठी

विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत्" ॥ अन्यच्च — "विशि राजा प्रतिष्ठितः" ॥

अस्मात् स्पष्टं ज्ञायते यत् प्राचीनकालेऽपि प्रजातन्त्रप्रणाल्या एव अनुकरणमासीत्।

एवं प्रजातन्त्रप्रणाली एव उचिता वर्तते। यतो हि अस्यां प्रणाल्यां राजा स्वेच्छानुसारं कार्यं कर्तुं न पारयति। सर्वे जनाः समानाधिकारवन्तः भवन्ति। सर्वैः जनैः स्वप्रयत्नानुसारं अधिकाधिकमुच्चपदञ्च प्राप्तुं शक्यते।

अनया प्रणाल्या देशस्य स्थायिनी उन्नतिर्भवति एवं राजतन्त्रप्रणाल्यां भवितुमशक्यं वर्तते। अतएव प्रजातन्त्रप्रणाल्येव सर्वोत्कृष्टा वर्तते। इत्येवास्ति मे सुदृढं मतम्। इत्यलम्।

धर्मवीरः →

देवगोष्ठी

# किं भवन्तः जानन्ति ?

यत् →

१→ १९२१ तमे वत्सरे प्रथमः भारतीयध्वजः निर्मित आसीत् ॥ →

२→ १९२८ वत्सरे प्रथममाकाशवाणीकेन्द्रं मद्रास-नगरे संस्थापितम् ॥ →

३→ संसारस्य विशालतमः प्रासादः रोमदेशे विद्यते, "वैटाकिन" इति नाम्ना यो हि प्रसिद्धः ॥

४→ जगत्प्रसिद्धो विशालतमः अद्भुतालयः लन्दननगरे वरीवर्ति ॥ →

५→ १९०६ तमे खीष्टाब्दे महाराज्ञाः "विक्टोरियाः-याः मूर्तिः कलकत्तानगरे जनैः त्रोटितासीत् ॥

— धर्मदीपः —

# देवगोष्ठी

## सुधीन्द्र इन्द्र विद्यावाचस्पति

समयसैकते महापुरुषाः यानि स्व-चरणचिह्नानि विमुच्य प्रयान्ति तान्येव चरणचिह्नानि अनुगम्य साधारण जनाः अपि स्व-जीवनं सफलं कर्तुमिच्छन्ति। एवंविधानां महापुरुषाणां श्रेण्यामेको विद्वज्जनवन्दनीयो धीराणामग्रणीः प्रातःस्मरणीयः श्रीमान् इन्द्र नामधेयो नेता आसीत्।

श्रद्धेयजनानां श्रद्धापात्रं श्रद्धायाः-मूर्तिः स्वयं श्रद्धेयः स्वामि श्रद्धानन्दो महाभागोऽस्य पिता आसीत्। स चात्मानुरूपं सर्वगुणसम्पन्नं पुत्ररत्नं प्राप। बाल्यादेव च सोऽतीव प्रतिभा सम्पन्न आसीत्। प्राप्ते च षष्ठे वर्षे स्वामि श्रद्धानन्द महोदयेन सर्वतः प्राक् यम नियमादिना संयमितं नियन्त्रितञ्च गुरुकुलस्य कठोर-जीवनं यापयितुमयं गुरुकुलं प्रेषितः। तत्रायं चतुर्दश-वर्ष-पर्यन्तं स्व-शिक्षाकालं यापयित्वा वेदालङ्कार-इति उपाधिना विभूषितः। अयं गुरुकुलस्य

# देवगोष्ठी

प्रथमः स्नातक आसीत् । सुरधुन्यास्तीरे स्थिते परम पावने गुरुकुले स्थित्वाऽनेन सर्वेषामेव विषयाणां मध्ययनं कृतम् । हिन्दी माध्यमेन संस्कृत-साहित्यं, वैदिक-साहित्यं, दर्शन-शास्त्रम्, आर्य भाषा-साहित्यं, गणित शास्त्रं, आंग्ल भाषा साहित्यञ्चाप्यधीतम् । गङ्गायास्तीरे निर्जन वनेषु उन्नतोपत्यकासु प्रकृत्याः क्रोडे च क्रीडयन्नयमतीव साहसिको बभूव । अधीत-सकलशास्त्रेण स्नातकेन चानेन विद्या वाचस्पति परीक्षापि उत्तीर्णा । स्व शिक्षा काले एव अनेन पत्रकारितायाः सम्पूर्ण ज्ञानं प्राप्तम् । आर्यभाषाऽस्य प्रिया भाषा आसीत् । आर्यभाषायां बाल्यादेवायं निबन्धान् लिखति स्म । भाषणेऽपि च बाल्यादेव कुशल आसीत् । स बालकः कथं न सर्वगुण सम्पन्नः स्यात्, यस्य पितृचरणाः सर्वगुणसम्पन्ना आसन् । नैपोलियन नाम्नो विजयिनः चरित्रमपि स्व शिक्षाकालेएव लिखितमनेन ।

अतिक्रामत्सु च दिवसेषु सम्पूर्ण

# देवगोष्ठी

स्वाध्ययनं परिसमाप्य देहली नाम नगर्या-मयं निवस्तुमारेभे। भारतदेशस्य राजधानी देहली एवास्य कार्यक्षेत्रमासीत्। अत्रैव स्थित्वाऽनेन स्वदेशाय स्वधर्माय मनसा वाचा कर्मणा च कार्यं कृतम्। पत्रकारितायाः क्षेत्रेऽयं प्रथमः पत्रकार आसीत्। येन "वीर अर्जुन" नाम पत्रं सम्पादितं, संवर्धितञ्च। यदास्माकं मातृभूमिः पराधीनतायाः श्रृंखलायां परावृता आसीत्। यदा च स्वतन्त्र रूपेण वचनात् लेखनाच्च भारतीयाः बिभ्यति स्म। तस्मिन् कालेऽनेन देहली नगर्यां पत्रकारितायाः नेतृत्वं कृतम्। अतएव सर्वे राजधानी वासिनः न केवलं राजधानी-वासिनः अपितु सर्वे देशवासिनः एनं सम्यक् जानन्ति, श्रद्धया च चरण कमलयोः नतमस्तकाः जायन्ते। आर्यभाषाऽस्य प्रिया भाषा आसीत्। अस्य भाषा संस्कृत निष्ठा प्रभावशालिनी चासीत्। अस्य लेखन्याः प्रभावेण प्रभाविता जनाः मुग्धाः जायन्ते स्म। अस्योजस्विनी भाषा देश-

# देवगोष्ठी

वासिनः प्रेरयति । भाषणेऽप्ययं कुशल आसीत् । अस्य मुखकमले सर्वदा सरस्वती निवसति स्म । न कोऽप्येतादृशः पुरुषः परिलक्ष्यते पृथ्वीतले योऽस्य भाषणं श्रुत्वा प्रभावितो नाऽभूत् ।

अयं देशस्य लेखकेषु एकोऽद्वितीयः लेखक आसीत् । साहित्य क्षेत्रेऽप्येतेन देशस्य महती सेवा कृता । अनेन अनेकानि पुस्तकानि लिखितानि । तेषु पुस्तकेषु अस्याऽऽभ्यन्तरभावनायाः दिग्दर्शनं भवति । हिन्दी साहित्यस्योन्नत्यां येषां साहित्यकानां योगो वर्तते । तेष्वयमग्रगण्यः । यावज्जीवमयं हिन्दीभाषा आर्यभाषा भाषिणः तं न विस्मरिष्यन्ति ।

राजनीति क्षेत्रेऽप्येतेन स्पृहणीयं कार्यं कृतम् । अष्ट-वर्ष पर्यन्तमयं संसत्-सदस्य आसीत् । अनेन न कदापि स्व राष्ट्र-भाषायाः गौरवं परिक्षीणं कृतम् । संसत् भवने न कदाप्याङ्गलभाषायाः प्रयोगः कृतः । सर्वदैवार्य-भाषयैव अवदत् । एतानि कार्याणि कुर्वन्नपि

# देवगोष्ठी

अयं गुरुकुलस्योपकुलपतिपदमपि सुशोभयामास। अस्य नेतृत्वे गुरुकुलेन सर्वाङ्गीणा उन्नतिः कृता।

एतादृशाः अनेके पुरुषाः परिभ्रमन्ति भूतले, ये जीवनं धारयन्ति न किमपि कुर्वन्तश्च पशुत्वं प्राप्नुवन्ति। परं तेषामेव जीवनं धन्यं भवति ये स्वदेशाय स्वधर्माय च स्व सर्वस्वं समर्पयन्ति। एतादृशानां पुरुषाणां मध्ये एवैनं महापुरुषं गणयन्ति गुणिगणाः। परं विचित्रा लीला परमेश्वरस्य। तस्य अमानव्याः शक्त्याः समक्षं मानवी शक्तिः नगण्या वर्तते। यो वयमिच्छामः स न भवति। "जातस्य हि ध्रुवो मृत्युः" इति वचनानुसारं योऽपि जगति देहं धारयति तस्य मृत्युरपि भवत्येव। अद्य देशवासिनोऽस्य महानुभावस्याभावमनुभवन्ति। परं देवलोके देवगणाः अपि तमाह्वयन्ति स्म। अत एवेन्द्रः इन्द्रलोके इन्द्रपदं सुशोभयितुमगच्छत्।

सुरेन्द्र कुमारः

# प्रवर्षन् वारिवाहः

श्रीमान् धर्मदेवो वेदवाचस्पतिः

पीत्वा भृशं जलधिवारि प्रपूर्णकुक्षिः
पीनोदरः परिगृहीत सुनीलतल्पः ।
पीडा प्रकर्ष विष संचय कृष्णगात्रः
नीचैः जलं वमति खिन्नमनाः पयोदः ॥





# देवगोष्ठी






i) सच्चरित्रतायाः अभावे, केवलं बौद्धिकं ज्ञानम्, सौरभमपः शव इव विद्यते। —— महात्मा गान्धी

ii) एतच्चरित्रमेव वर्तते, यद्धि आपदां दुर्भेद्येष्वपि प्राचीरेषु मार्गं रचयति। — विवेकानन्दः

iii) चरित्रमेतादृशं हीरकं वरीवर्ति, यन्नु अखिलानपि अन्यान् पाषाणान् खण्डशः करोति। — बारदल



# देवगोष्ठी



## आधुनिकी शिक्षा प्रणाली

सर्वप्रथमम् एतत् विचारणीयं यत् शिक्षायाः किमुद्देश्यम्। वास्तविक रूपेण सैव शिक्षा वर्तते यया आध्यात्मिकी भौतिकी सर्वाङ्गीणोन्नति भवेत्। इदं विचार्य वयं परीक्षां कुर्मः यत् अस्मिन् समये या शिक्षा प्रणाली प्रचलिता किमियमस्माकं सर्वाङ्गीणोन्नतिं कर्तुं समर्था?

शिक्षाया उद्देश्यं यत् सर्वे छात्राः शिक्षकाश्च सुचरित्रवन्तः स्युः। परमधुना वयं पश्यामः यत् न तु शिक्षकाः नैव च छात्राः सुचरित्रवन्तः सन्ति। छात्राणां व्यवहारं तु वयं प्रतिदिनं पश्यामः। अस्य कथनस्य न काऽपि आवश्यकता। समाजे छात्राणां न कोऽपि समादरः। इयं शिक्षा चरित्रस्य उन्नतिं कर्तुमसमर्था एव। आधुनिकाः छात्राः पितॄणामपि आदरं न कुर्वन्ति का कथा पुनः गुरूणाम्।

# देवगोष्ठी

शारीरिकी आध्यात्मिकी मानसिकी भौतिकीति कस्मिन्नपि क्षेत्रे अस्माभिरुन्नतिर्न कृता अस्मिन् काले। शारीरिक दृष्ट्या तु वयं अति निर्बलाः स्म। प्राचीनकाले शत वर्षाणि यावत् पुरुषाः जीवन्ति स्म परमधुना तु ते चत्वारिंशद् वर्षाणि यावत् अति काठिन्येन जीवन्ति। अस्यां शिक्षायां न खलु किमपि स्थानं ब्रह्मचर्यस्य।

इयं शिक्षा आध्यात्मिकी शिक्षां तु सर्वथैव न हि ददाति। आधुनिककाले न कोऽपि पुरुषः उचित रूपेण ईश्वरस्य भजनं करोति येन वयमुत्पादिताः।

अस्मिन् समये गुरुशिष्ययोः सम्बन्धस्तु अस्त्येव न। गुरोरुपरि स्थित्वा विद्यां प्राप्नुवन्ति। ते कथयन्ति वयं तु धनं दद्मः कुतः न त्वं शिक्षां दास्यसि किन्तया शिक्षया यस्यां गुरु शिष्ययोः सम्बन्धोऽपि न भवति।

अधुना या परीक्षा प्रणाली प्रचलिता सा अपि नैवोचिता। अस्यां परीक्षायां

# देवगोष्ठी

अपि अनादरो भवति।

अधुना या शिक्षा प्रणाली विद्यालयेषु महाविद्यालयेषु च प्रचलिता सा तु भारतीय संस्कृति शून्या उद्योगादिना रहिता वर्तते पुरुषं च निष्क्रियत्वं प्रापयति। इदमेव कारणं यत् वयं स्वजीवन निर्वाहं कर्तुं असमर्थाः। सर्वे छात्राः विद्यां गृहीत्वा सेवा कार्यं वाञ्छन्ति यदि ते तादृशं कार्यं न प्राप्नुवन्ति तर्हि आत्महत्यां कुर्वन्ति। या शिक्षा अस्मान् निष्क्रियत्वं प्रति भौतिकवादं प्रति नयति को लाभस्तया शिक्षया। एतादृश्या शिक्षाया अनादरं तु भविष्यत्येव।

ये अस्माकं देशस्य आधुनिक कर्णधारास्सन्ति यथा शिक्षामन्त्री श्रीमान् माली महोदयः श्रीमान् देशमुखमहोदयः महामान्यस्य राष्ट्रपति महोदयः एते सर्वे अस्याः शिक्षाया आलोचनां कुर्वन्ति।

# देवगोष्ठी

पुरुषस्य विद्वत्ताया स्थानम् उचित रूपेण न भवति
उचित स्थाने विदुषां पुरुषाणां आगमनं न भवति।
सर्व क्षेत्रे उत्कोच प्रणाली प्रचलिता वर्तते। अस्मिन्
समये तु मूर्खाः अपि जनाः उच्चपदं प्राप्नुवन्ति।
मुख्य रूपेण अस्य कारणं अस्माकम् आधुनिक शिक्षा
एव वर्तते।

अधुना तु शिक्षा पुस्तकेषु एव सीमिता
वर्तते। सर्वेषां पुरुषाणां पठनानन्तरं एकमेवोद्देश्यं
भवति यत्ते गणक पदं प्राप्नुयुः। इयं शिक्षा अस्मान्
स्वकार्यं कर्तुमपि समर्थान् न करोति। आधुनिकाः
बालकाः स्वल्पमपि परिश्रमसाध्यं कार्यं कर्तुं
स्वानादरं मन्यन्ते। सर्वे जनाः स्व प्रियां हिन्दीभाषां
त्यक्त्वा आंग्लभाषाम् आदर दृष्ट्या विलोकयन्ति
एवञ्च हिन्दी भाषाया अनादरं तु भवत्येव परं राष्ट्रस्य

# देवगोष्ठी

अन्ते च सैव शिक्षा यया

भौतिकाध्यात्मिक रूपेण सर्वाङ्गीणोन्नतिः स्यात्। यदि वयमस्माकं देशस्य उन्नतिमिच्छामस्तर्हि अस्याः शिक्षायाः स्वरूपे परिवर्तनं विधेयं तदा एव अस्याः शिक्षाया उद्देश्यं पूर्णं भविष्यति॥

रामकृष्णाश्चतुर्दशीयो
वेदमहाविद्यालयः



सुभाष १४

# वीरवरः प्रतापः शिववीरश्च →

— कोविदवतो. धर्मदेवो विद्यामार्तण्डः

यः शूरवीरेषु शिरोमणिः सन्
अदम्यमुत्साहमिहादधानः ।
नाङ्गीचकारेतरपारतन्त्र्यं,
तं श्रीप्रतापं वनिता नमामः ॥

एकोऽल्पसेनोऽपि न यो वरेण्यः,
सत् क्षत्रियाणां नृमणिर्ह्यकम्प्य ।
पुरः कदाचिन्मुगलाधिपानां,
तं श्रीप्रतापं वनिता नमामः ॥

कीर्तिर्यदीया धवलामलेयं,
विराजतेऽद्यापि हि सर्वदिक्षु ।
तं राजनीतौ कुशलाग्रगण्यं,
वीरं नमामः शिवराजसिंहम् ॥

यः प्रस्थापयामास सुधर्मराज्यम्,
प्राकम्पयच्चाप्यवरङ्गजीवम् ।
श्रीरामदासादिसतां विधेयं,
वीरं स्तुमस्तं शिवराजसिंहम् ॥

ओं देवगोष्ठी ओं

# प्राच्य-प्रतीच्यचिकित्सयोर्भेदः

— श्रीमद्भगवद्दत्तो वेदालङ्कारः

देहात्मबन्धस्थिति कारणानि
बुद्ध्या विजानीहि विचार्यतानि।
स्वाद्वन्नसारात्मक भोजनानि
शरीरशक्त्युद्भव हेतुकानि ॥१

प्राणैः क्रियावान् गतिमांश्च लोके
प्राणान्वियोज्यस्थितां प्रयाति।
स्रोतो नु तेषां भवतीह देहे
घ्राणैर्निपीतः पवनप्रवाहः ॥२

सोमात्मकान् विधिरसान्नु सर्वान्
सर्वांश्च सोमांश्चिति चर्चितानि वै।
यदापि चेच्छा स्थिति धारणाय
न चाम्बुपानं कथितं विबुधैः ॥३

नायं समर्थः किल भूतसंघः
कर्तुं स्वयं मानव जन्मजातम्।

# देवगोष्ठी

कोऽन्यः समुत्पत्तिमिमां विधातुं
शक्तः सुधीभिस्तु विवेचनीयः ॥ ४

आत्मा मनो वा मनुषां तनुर्भयः
आवश्यकं तत् प्रवदन्ति तज्ञाः ।
वंशानुपातेन हि प्राच्य संज्ञा
प्राप्तात्मना वै बिबुधां सकाशात् ॥ ५

देहास्त्वयं नाशमुपैति काले
काले हि जातः स तु भूतसंघात्
उच्चार्य ते तेन जनैः प्रतीच्य
प्राच्यप्रतीच्यात्मनि ह्यैष भेदः ॥ ६

प्राच्यप्रतीच्येषु गदेषु भेदः
प्राज्ञैः पुराणैः भणितो भिषग्भिः
रोगापहारेऽपि तथैव भेदः
ज्ञातस्तु तैः गुह्य विचार विद्भिः ॥ ७

प्राच्ये चिकित्सा नहि भौतिकी सा
पारं प्रयातीह सुसाधिता वै
तत्रास्ति सामर्थ्यमलौकिकानाम्
रोगापहारे खलु साधनानाम् ॥ ८

# देवगोष्ठी

प्रतीच्य रोगेषु तु भौतिकी वै
मान्या चिकित्सा भिषजां वरेण्यैः ।
इत्थं विभेदः खलु चिन्तनीयः
सर्वैः सुधीभिः स्तुतयोर्तयोर्वै ॥८

पं. भगवद्दत्तः
वेदालङ्कारः



# देवगोष्ठी

## पञ्चशीलानि

1. अन्येषां देशानां प्रादेशिकाऽखण्डतायाः प्रभुसत्तायाश्च समादरः ।
2. कस्मिंश्चिदप्यन्यस्मिन् देशेऽनाक्रमणम् ।
3. कस्यचिदपि देशस्यान्तरिक विषयेष्वनाक्षेपः
4. समानता परस्परलाभश्च
5. शान्तिपूर्वकं सहास्तित्वम् ।

— जितेन्द्रः

देवगोष्ठी

# भारतीया वैदेशिकी नीतिः

अस्माकं देशस्य विदेशनीतिः समुचिता नवेति विषयमाश्रित्य बहुधा विवादः प्रवर्तते । "प्रज्ञा तु मन्त्रेऽधिकृता न शौर्यम्" इति नीतिवचोऽनुरूप्यैव अस्माभिः स्वकीया विचारसरणी प्रसारणीया । एतादृशे जटिले प्रश्ने विचार्यमाणे सति नास्माभिः सहसा आवेशवशात् स्वार्थबुद्ध्या वा किमपि विधानीयम् , अपितु सर्वां पूर्वापरभाविनीं दशां विवेकबुद्ध्या विचार्य अस्माभिः स्वनिर्णयो देयोऽनुष्ठेयश्च ।

अयि सभ्याः महानुभावाः ! नाविदितं भवतां श्रीमतां यदिदं सुविशालं द्वितीयं महायुद्धं जगतो विनाशाय अमंगलायैव केवलं बभूव । परमाणुशस्त्रबलेन न केवलं जापान-देशस्य महती विनष्टिः समवर्तत,

# देवगोष्ठी

यां इंगलैण्ड-फ्रांस-जर्मनी प्रभृतीनां युरोपीय-महाशक्तीनामपि प्रबला क्षतिरभूत्। यदि कश्चिच्चतो मुक्तः तर्हि रुसामेरीकादेशावेव। तत्रापि विशेषतः अमरीका देश एव। यस्य गत महायुद्धे न काऽपि क्षतिरभूत्। प्रत्युत स किल कुसीदात् सुप्रचुरमर्थराशिमवाप्य स्वसमृद्धिं समेधयामास। अतः द्वितीय महायुद्धावसाने यद्यपि दयनीयां दशामुपगता अन्ये देशाः दीनाः क्षीणाश्च सन्तः भगवन्तं सकलजगदधिनायकं परमेश्वरं शान्त्यै प्रार्थयन्ते, तथापि रुसामेरीकादेशौ स्वसाम्राज्य विस्तारेप्सया शीतयुद्धे प्रवृत्ताववलोक्येते।

अस्मिन् अतीते महासमरे क्षीणशक्तयः ब्रिटेन-हालैण्ड फ्रांस प्रभृतयो देशाः स्वीयान् उपनिवेशान् यथापूर्वमायत्तीकर्तुमसमर्थाः सन्तः तान् पराधीनतापाशान्मुमुचुः तेन च स्वकीय स्वातन्त्र्य संग्रामे सफलीभूताः

# देवगोष्ठी

भारतवर्ष- बर्मा - इण्डोनेशिया - मिस्र - लंका - मलाया- घाना प्रभृतयः देशाः स्वातन्त्र्यं लेभिरे। तदयं महायुद्धप्रभावजर्जरीतानां यूरोपीय- देशानां सद्योपलब्धस्वातन्त्र्यजन्मनां अस्मा- दृशां एशियाई देशानां च निर्माणकालो, न तु व्यापारकालः।

अस्मिन् परमाणुशस्त्रप्रधाने दूरप्रक्षेपकास्त्रप्रतिद्वन्द्वितापरायणे च युगे कोऽपि देश एकाकी सुरक्षितश्च न तिष्ठति। एकत्रापि प्रसज्यमाने समरे विश्वमपि विश्वं तत् प्रभावात् दह्यते क्लिश्यते च, इदानीं एकमेव परमाणुशस्त्रं न्यूयार्कोपमं महानगरं एकेनैव क्षणेन भंजितावशिष्टं वा विधातुमलम्, एकेनैव परमाणुशस्त्र-प्रहारेण पुरतः जानुभ्यामवनिं गन्तुं बलात् बाध्येत। एकेनैव रॉकेट प्रयोगेण कश्चिद्देशः कतिपय- सहस्रक्रोशदूरवर्तिनमपि देशं खण्डितं भग्नाव- शेषं च विधातुं पारयेत्। नूनं सोरियो

# देवगोष्ठी

विजयोऽस्मिन् युगे । 'नहि सांशयिकं कुर्यात्' इति बृहस्पतेः वचोऽनुसरद्भिः अस्माभिः स्वात्मा युद्धाग्नौ न पातयितव्यः । नास्माभिः रूसपक्षपातिभिः अमरीकापक्षपातिभिर्वा भाव्यम् । साम्राज्यलिप्सापतितयोरनयोर्देशयोः युद्धतर्षातृप्तिसाध्यं मत्वा स्वकीया आर्थिकी-सामाजिकी वा उन्नति विधेया, तदनुकूला च वैदेशिकी नीतिरङ्गीकरणीया ।

पं ' अयं निर्माणकालो ननु व्यायामकालः ' इति निर्णये जातेऽपि न समस्या समाधीयते । यतो हि स्वराष्ट्रस्य विविधोन्नतिकारकं निर्माणं कस्याश्चित् महाशक्तेराश्रयेणैव संभवति । सा च महाशक्तिरिदानीं रूसदेशो वाऽमरीका वा । अतस्तयोरेकतरस्या आश्रयेण अनाक्रमभिमतनीतिः संभवति - इत्यपि केषांचित् विचारकाणां मतम् । चीनपाकिस्तानौ च

# देवगोष्ठी

तत्र दृष्टान्तत्वेन उपन्यस्येते । यत् न तद्-
सम्भवं रोचते । अस्माभिस्तु श्री पण्डित-
जवाहरलालनेहरूभिरंगीकृता तटस्थनीतिरेव
समुचिता मन्यते । यतोहीदानीं यत्स्या-
विरोधगान्तयोरनयोः महाशक्त्योर्मध्ये कस्या-
प्येकतरस्य आश्रयो ऽपरस्या विरोधाय कल्पिष्यते
तेन च तयोरेकतरपक्षाश्रयेण चाद्विकादल-
ऽपवर्ति गोधूमपिण्डभिवास्माकं गतिर्भवि-
ष्यति । तेनास्माकं विनाश एव, न तु कोऽपि
लाभः । तथा च एकतरपक्षाश्रयाद्यां नीति-
मवलम्ब्य वयं युद्धमुत्तेजनं विधाय
लोकविध्वंसापराधिनो ऽपि भविष्यामः ।
अस्माभिस्तु स्वसंस्कृत्यनुरूपं – "सर्वे भवन्तु
सुखिनः । सर्वे सन्तु निरामयाः । सर्वे भद्राणि
पश्यन्तु मा कश्चिद् दुःखभाक् भवेत्" इति
कल्याणमयीं भावनामन्तर्निवेश्य शान्त्यै
प्रयतितव्यम् । यत् नैषाहस्य अभिप्रायो यदि-
दानीं प्रत्यक्षमनुसृतोऽपि ~~यथासम्भवं~~

# देवगोष्ठी

चीनसंकटो न नेत्रे निमील्य उपेक्षणीयः। तदर्थं अस्माभिः सतर्कैः सावधानैः सीमान्तपरीरक्षणावधानैश्च भवितव्यमेव। तथापि यथासम्भवं युद्धापनयनायैव प्रयत्नो विधेयो न तु तदुद्दीपनाय। अन्यथा एकत्र समुद्दीपितो युद्धाग्निकणिका विश्वसमररूपमाश्रित्य समाप्ते वर्षे सकलमपि जगत् भस्मी कुर्यात्।

तस्मात् सुस्पष्टमेतद् यत् स्वदेशहिताय जगति शान्तिस्थापनाय च अस्माभिरिदानीं तटस्थनीतिरेवाश्रयणीया, तदर्थमेव च सततं प्रयतनीयम्। इत्यलमति विस्तरेण।

विबुधवरः धर्मदेवो वेदवाचस्पतिः

देवगोष्ठी

# विजय-दशमी

अस्माकं देशः पर्वणां धनी-
र्विद्यते, नास्त्यत्र कोऽपि सन्देहः। ऐतिहा-
सिकी काचित् घटना ~~अश्वस्य~~ अवश्यमेव
संजायते पर्वणामन्तरे। तासु काश्चिद्
घटनाः प्रकाशिताः, काश्चिच्चाप्रकटिताः
भवन्ति। संक्षेपतोऽस्माभिः किल कथयितुं
शक्यते, एतानि पर्वाणि मानवानां कृते
धूमयानानां संगमस्थानवत् (जंक्शन) जायन्ते।
यतोहि यथा धूमयानं सहस्रयोजनपर्यन्तं
नितान्तं गच्छत् स्वास्थितिस्थाने कतिपय
होरार्थमवतिष्ठति। तथैव मनुष्योऽपि
सततं बहुविधैः कार्यैर्घूर्णितः परि-
श्रान्तश्च एव मनोविनोदं विलासं

# देवगोष्ठी

च एतादृशेषु पर्वस्वेव विद्यमाति।

कथ्यते मनुष्यः एकः सामाजिकः प्राणी वर्तते। स वैयक्तिकभावेन निजोत्साहं न कर्तुमर्हतीति। यान्यपि पर्वाणि मान्यन्ते तान्यखिलान्येव सामूहिकरूपेण मान्यन्ते। एतादृशानि पर्वाणि कस्यापि राष्ट्रस्य, देशस्य जातेर्धर्मस्य वा राजनैतिकं-सामाजिकं-धार्मिकं-चैतिह्यं रक्षन्ति।

विजयदशमी, पर्यवसाने वर्षर्तोः, दशम्यां शुक्लपक्षस्य च मान्यते। पर्व एतन्निजदेशजात्यनुसारेण भारतवर्षस्य विभिन्नप्रान्तेषु पृथक् २ नाम्नाभिधीयते। बंगप्रान्ते दुर्गापूजा दुर्गापूजेत्यभिधानेन प्रसिद्धा। दुर्गापूजा एव तेषामुत्कृष्टं पर्व वर्तते ऽखिलेषु पर्वसु। तत्रास्मिन्पर्वणि समस्ता जना दुर्गां स्तुवन्ति। यदि तत्र विजयदशम्या अवसरे दुर्गामर्चयन्ति, तर्हि सरस्वत्यां ब्राह्मणाः, लक्ष्म्यां वैश्याः, शस्त्रास्त्रेषु क्षत्रियाः, उच्च-

# देवगोष्ठी

वर्णानामर्घ्यं सामग्रीषु च वैश्या निमग्ना भवन्ति। आसीदियं प्रथा आदि क्षत्रियाणां यद् वस्त्रैरात्मानं विभूष्य, विभिन्न शस्त्रैरलङ्कृत्य, अश्वेषु च आरुह्य, भ्रमणस्य। यत्र तत्राधुनाप्यवलोक्यते इयं प्रथा।

विजयदशमी, दशहरेति नाम्ना कथं प्रसिद्धा? अस्मिन्विषये एका रोमाञ्चकारणी ऐतिह्यरूप कथा प्रचलिता। यस्मिन्कालेऽस्माकं देशे रामराज्यमजायत आसीच्च भारतवर्षं धनधान्येन परिपूर्णं, तस्मिन्समये कैकेयी नाम्न्या मात्रा, रामं वनवासाय प्रेष्य रामराज्ये वज्रपातो विहितः। रामेण सह सीतालक्ष्मणौ च गतौ। अरण्यवास समये एकदा रामलक्ष्मणयोः अनुपस्थितौ, रावणेन साधुवेशं विरच्य कपटेन सीता अपहृता। अनया घटनया रामे दुःखपातोऽभवत्तथापि तेन अगाधधैर्योत्साहपराक्रम बाहुल्यात् सीतामधिगन्तुं पुनर्यत्नः कृतः। मर्यादापुरुषोत्तमेन रामेण –

# देवगोष्ठी

सुग्रीवहनुमत्सदृशीं चमूमेकत्र कृत्वा, दुर्दमनीयः, दुर्जेयः लंकाधिपतिश्च रावणः आक्रमितः, पराभूतश्च कृतः। तदा प्रभृत्येव इयं विजयदशमी, दशहरेत्यभिधानेन प्रसिद्धा जाता।

पर्वण्यस्मिन् जनाः वस्त्रालङ्कारैरात्मनमलङ्कुर्वन्ति, गृहाणि च निर्मलानि विधीयन्ते। ते च विचिन्तयन्ति यत् नु अद्यैव रामचन्द्रेण तेषां गृहाणि विभूष्यन्ते। मातरस्तु एतादृशं प्रसन्नवदना जायन्ते यथा तेषां पुत्रेणैव लंका विजिता, भगिन्यश्चापि निजाह्लादमवरोद्धुमेवमसमर्थाः जायन्ते यथा, तेषां भ्राता एव विजयदुन्दुभिरयमाकाशे गुञ्जायितः।

विजयदशम्याः पञ्चदशावधिदिनेभ्यः पूर्वमेव स्थाने स्थाने रामलीला विधीयते। अभिनयस्यावसाने रावणस्य,

# देवगोष्ठी

यवतृणादिनिर्मिता बृहत्काया प्रतिकृतिः अग्निसात् क्रियते। तस्या मध्ये च यत्र तत्र अग्निबाणा निधीयन्ते। ये वह्नौ प्रदीप्ते सति सततडतडाशब्दैः गगनं गुञ्जितं चित्रवर्णप्रकाशेन चालङ्कृतं कुर्वन्ति।

विजयदशम्या विषयेऽन्याः अपि बह्व्यः किम्वदन्त्यः प्रसिद्धाः सन्ति। कैश्चिदुच्यतेऽस्मिन्नवसरे राजदर्शनं शोभनं भवति, अपरैश्च कैश्चिदभिधीयते यत् नीलकण्ठस्यावलोकनं शोभनं जायते, यतोहि सास्मिन्दिने आत्मानं गोपायति, इतरैः कैश्चिच्च कथ्यते खञ्जनपक्षिणः दर्शनं शुभं जायते, यतो हि योऽपि पश्यति स कविः सञ्जायते। अन्या अपि बहुलाः किम्वदन्त्यः सन्ति।

वस्तुतोऽस्मिन्पर्वणि जनैः चिन्तितव्यं, यदस्मिन्नवसरे केवलं रामेण

# देवगोष्ठी

रावणः न पराजितः, परं धर्मेणाधर्मो जितः। अस्मिन्दिने रामस्य विजयो न, अपितु न्यायेनान्यायः परास्तः कृतः आसीत्।

अद्यश्वो नवयुवकैः युवतिभिश्च इयं प्रतिज्ञा करणीया, यद्वयमपि रामलक्ष्मणसदृशाः, सीतातुल्याश्च भविष्यामः। तदैवास्माकं देशः स्वर्णयुगस्य सोपाने आरोढुं समर्थो भविष्यति, तदैव चान्यदेशवासिभिः पुनः कथयिष्यते "जयतु जयतु भारतदेश" इति॥

ब्रजेशकुमारो द्वादशीयः

+ + + + + + + + + + +

+ + + + + + + + + + +

# भारते प्रचलिता संस्कृत-शिक्षाप्रणाली संस्कृतौ-न्नतौ साधिका

जगति विद्यमानासु भाषासु अमरवाण्याः संस्कृतभाषाया विशेषस्थानं विद्यते। प्राचीन धार्मिकसाहित्यस्येयं संरक्षिकावर्तते अतः धार्मिकदृष्ट्यास्याः अत्यधिकं महत्त्वमस्ति। यादृशानि सुन्दराणि काव्यानि नाटकानि पुस्तकानि च संस्कृतभाषायां वर्तन्ते न तादृशानि अन्यासु भाषासु। कलात्मकदृष्ट्यापि विशेषस्थानमस्या अस्ति।

राजनैतिकदृष्ट्या इयं भाषा महत्त्वपूर्णा। वर्तमानकाले हिन्दीभाषाया विकासस्तु भवत्येवास्या एव कारणात्। अतः सकलदृष्ट्यास्या भाषाया गौरवास्पदं स्थानं

# देवगोष्ठी

वरीवर्ति। एतदेव कारणमस्ति यत् सततमेव संस्कृतस्य प्रचारः सर्वत्र वर्धत एव साम्प्रतम्। प्रायशः प्रत्येकं विद्यालये देववाणी पाठ्यते। प्रतिवत्सरं छात्रा आचार्यशास्त्री विद्यावाचस्पत्यलङ्कारादीन उपाधीन प्राप्नुवन्ति।

उत्तरप्रदेशे तु एकः संस्कृत विश्वविद्यालयोऽपि विद्यते वाराणस्याम्। पञ्चनदप्रान्ते कुरुक्षेत्र नगरेऽपि विश्वविद्यालयः प्रतिष्ठापितः यो हि शनैः २ विकसति। संस्कृत प्रचारस्य कारणं वर्तते च भारते प्रचलिता वर्तमान-संस्कृत शिक्षा प्रणाली। बहवो कथयन्ति यत् इयं प्रचलिता प्रणाली संस्कृतोन्नतौ बाधिका वर्तते। केचिदुच्यते यत् वर्तमान समये अस्यां प्रणाल्यां व्याकरणाध्ययनेम-हान् कालो याति। अतः व्याकरणाध्ययनमिदं संस्कृतोन्नतौ बाधकं वर्तते। परमेतत् कथनं कथमपि उपयुक्तं न प्रतिभाति।

# देवगोष्ठी

व्याकरणमेव तु संस्कृतभवनस्याधारशिला वर्तते। तस्मिन्नाधारे दुर्बले सति निश्चितमेवास्ति पतनं संस्कृत भवनस्य। अनेकस्थलानि एतादृशान्यपि सन्ति येषां सम्यक् बोधः व्याकरणं बिना न कथमपि संभवति। यथा कुत्र "कुमागमो" कुत्र "अडागमो" कुत्र यड् कुत्र च लेः स्थाने सिच् भवति कुत्र च स्यः भविष्यतीति अस्य बोधो न भविष्यति।

गृह्धातोः क्त प्रत्यये सति गृहीतुमिति रूपं भवति, तुमुन प्रत्यये सति गृहीतुमिति रूपं भवतीति कथं ज्ञायते व्याकरणं बिना। अतः व्याकरणस्याभिज्ञं संस्कृतोन्नतौ बाधकमिति वर्तते इति न। व्याकरणेन तु संस्कृत भाषा सरला भवति। अतः व्याकरणमेव साधकमस्ति॥

# देवगोष्ठी

योऽयं दोषो दीयते यत् जटिलं
वर्तते व्याकरणं, तस्य च पठनेन काठिन्य-
मुत्पद्यते, विद्यार्थिनां कृते च नीरसता
भवति इत्यस्य समाधानं तु वर्तते एव।

येन कोऽप्यधिकं व्याकरणं पिप-
ठिषति स राजकीयविद्यालयेषु पठेत् न
पुनः पाठशालासु यत्र हि व्याकरणस्य गहन-
मध्ययनं भवति। अन्याः प्रणाल्यास्तु इय-
मेव विशेषतास्ति यत् पृथक् २ प्रबन्धोऽस्ति।

अत्र पुनः ये केवलं संस्कृत-
साहित्यस्याध्ययनं कुर्वन्ति तेषां ज्ञानं परिमितं
जायते। ते हि व्यावहारिकं ज्ञानमपि न
जानन्ति। वर्तमानकाले प्रचलितासु संस्कृ-
त पाठशालासु अन्ये विषया न पाठ्यन्ते, अत
इयं प्रणाली दूषिता

अनया प्रणाल्या मानसिकविकासो
न भवति। अतः ये केवलं संस्कृतं पठन्ति

ते मूढधियो भवन्ति । यदि संस्कृतेन सह अन्ये
ऽपि विषयाः पाठ्येरन् तदा लाभो भवेत् ।
इति यदि कश्चिदुक्तवान् तर्हि उत्तरमस्ति यत् निराधा-
रोऽयं दोषः । येषामेतत् कथनमस्ति मन्ये
तैः वाराणसीय संस्कृत विश्वविद्यालयस्य
पाठ्यक्रमो न दृष्टः । तत्र खलु अन्येऽपि
बहवो विषयाः पाठ्यन्ते । इत्थं संस्कृतछात्रे-
षु सामान्यज्ञानस्याभावं प्रकाशयन्तस्ते आल-
स्येन सामान्यज्ञानशून्यतां प्रदर्शयन्ति । यतो हि
वाराणसीय संस्कृत विश्वविद्यालयस्य
पाठ्यक्रमं विलोक्य सामान्यज्ञानस्य
पाण्डित्यं प्रकाशतामायाति ।

अन्योरमुच्यते यत् कोऽपि छात्रः
संस्कृतभाषां न पिपठिषति यतो हि
प्रणाली दूषिता वर्तते । अत एव येयं
संस्कृतोन्नतौ बाधिकाऽस्ति इति । अत्र विषये

# देवगोष्ठी

इदमेव ब्रूमः यत्रोष संस्कृत शिक्षा प्रणाल्या न दोषः, परं शासकानामेव, ये किल संस्कृत भाषायाः आंग्लभाषायाश्च विदुषां भेदं जनयन्ति। सर्वकारः यथाङ्ग्ल भाषाविदां सम्मानं करोति तथा संस्कृतज्ञानां न। चेत् उभयोः समानः आदरः स्यात्, तदा तद्दृष्ट्वा छात्रा अपि पठिष्यन्ति इमां भाषां। साम्प्रतं एम. ए उपाधिधारिणं यादृशमनु-रूपं वेतनं दीयते, तादृशमपि आचार्यो-पाधिभूषितेभ्यः संस्कृतपंडितेभ्यः न। तर्हि कथं छात्राः संस्कृतं पठितुमुत्सहेरन्।

यदायं भेदो न भविष्यति सर्वकारः संस्कृतज्ञानामपि समादरं करिष्यति तेभ्यः समानाधिकारान् प्रदास्यति तदावश्यमेव संस्कृतस्य प्रचारः उन्नतिश्चाधिकाधिकं भविष्यति। ये पुनः अर्वाचीनवादिनः सर्वमेवेदं प्राचीनमिति मनसा मन्यमानाः सर्वत्र दोषमेव

# देवगोष्ठी

गवेषयन्ति, ते किल सादरं स्वानुभवान् अभ्यर्थन्ते गुणदोषविवेकपुरस्सरं समीक्षितुम् ।

अपि सभ्याः पाठकाः! यदि भवन्तः संस्कृतसाहित्यस्यागाधगाम्भीर्यस्य महिमानं कामयन्ते, यदि धीमन्तः शब्दार्थानामभिनिवेशमर्मज्ञमेव बोद्धुमभिलषन्ते, तर्हि पंडितप्रवरैः प्राचीनात् कालात् प्रवर्तितामिमां प्रणालीमेवानुसरन्तु । अत्र पुष्पादिसेचनं विहाय मूलमेव सिञ्चन्तु, अन्यथा हानिरेव न कोऽपि लाभविशेष इत्यलं विस्तरेण ॥

श्यामनाथः



देवगोष्ठी

# आचार्यरामदेवः

विजयकुमारो नावमिकः

यस्य स्मृतिः साधु चमत्कृतासीद्,
धर्मे च निष्ठा सततं विकम्पा।
सद्योगमता विज्ञजन प्रशस्ता
श्री रामदेवं तमहं नमामि॥

"स्वार्थो यस्य परार्थ एव स पुमान् एकः सतामग्रणी"

ईदृशस्य सामाजिकस्य यदि किमप्युदाहरणं समुपस्थाप्येत् तर्हि आचार्यरामदेवादधिकं किमप्युदाहरणं न शोभनम्। उत्थाने, शयने, पाने, भाषणे प्रत्येकक्षणमेव तेषां मस्तिष्के वैदिकधर्मोद्धारः, आर्यसंस्कृतेः महत्त्वं, प्राचीनसभ्यतायाः पुनरुद्धारः कथं भवेत्

# देवगोष्ठी

एषु विषयेषु ते संलग्ना अभवन्। आयुर्न्तं पर्यन्तं जीवनस्य केवलमिदमेवोद्देश्यमासीत्।

तेषां जन्म, पालन पोषणं देहान्तश्च सर्वे आर्यसामाजिकस्य वातावरणे अभवन्। तेषां पिता ला. चन्नूलाल महोदयस्तु आर्य-सामाजिक एवासीत्। पिता पितृव्यश्च द्वौ बालकौ पाठयित्वा स्वकीयसामाजीविकामार्जितम्। पिता पाञ्चालस्य डी०ए०वी० शिक्षा-परिवारे मुख्याधिष्ठाता आसीत्। तस्य प्रभावेन तथा तेषां मित्राणां संसर्गजातस्मिन् सितलपतिरायेऽपि बहुस्य धार्मिकविषये-षु च अभवन्, यो बालक रामदत्तः (आचार्य रामदेवस्य बाल्यकाले इदमेवासीत् नाम) एकाग्रचित्तो भूत्वा अशृणोत्। कदाचित्तु सोऽस्मिन्नयां रात्रौ व्यतीतायामपि नास्वपत्।

# देवगोष्ठी

बालक रामदासस्य जन्म खीष्टाब्दे बनवासा
ग्रामे जिलाहोशियारपुरे अभवत् । तेषां
पितृचरणा मजीठिया परिवारस्य शिक्षका
आसन् अतस्ते निज कार्येभ्योऽन्यत्रागच्छ-
गमन् । अत एव रामदासस्य सम्बन्धस्य
जन्मभूम्या सह किञ्चो नासीत् ।

आधुनिक कालात् षष्टि वर्षपूर्वं
पंचनद प्रान्तस्य जालन्धर नगरे पञ्चदश-
षोडश वर्षदेशीयः एको नवयुवकः ग्रीष्म-
कालोत्तप्यमानः मध्याह्नकाले मार्गस्य
तीरे एक वटवृक्षस्याधः स्वपुस्तकानि
निधाय पातिष्ठत् । तस्य युवमंडलं
चिन्ताग्रस्तमौदासीन्येन पूरितमासीत्
किन्तु ततोऽपि तस्य मुखमण्डलं उज्ज्वल ज्योत्स्ना-
त् प्रकाशते । अस्मिन् समये एव एकः

# देवगोष्ठी

पथिकस्तत्कालं मार्गमागच्छत् । स तं युवकं तत्र एकाकीस्थितं कारणमपृच्छत् । युवके-नोक्तम् — "मम पित्राहं गृहात् निष्कासितः महाविद्यालयस्याचार्येण च कक्षाया निष्का-सितः । "अहं कुत्र गच्छेयम्" इत्येवाहं चिन्त-यामि । मह्यन्तु इदं सुपरिचितं जालन्धर-नगरमपि अरण्यमिव प्रतिभाति, अत एवा-हमत्र वटस्याधः तिष्ठामि । पथिकेन गृहमहाविद्यालयाभ्यां च बहिष्कृतेः कारणं पृच्छति स युवकोऽब्रवीत् । "अहं स्वगृहेऽवगुण्ठनप्रथाया अन्तं चिकीर्षामि, अहं स्वभार्याया स्वस्नुषा-वगुण्ठनवसनस्य विरोधमकरवम्, यस्या-यं दुष्परिणामः — मम गृहात् महाविद्या-लयाच्च निष्कासनम् —" पथिकमुखाद-कस्मादेव निःसृतमिदं वचनम्, "अति—

# देवगोष्ठी

निर्भीकः, साहसी, दुखितनारीजातेः वेदनाम्
इममगाधसागरमन्तरे निधाय, क्रान्तेः
अग्रदूत! कोऽसि। त्वं युवक। युवक
उवाच - अहमत्र महाविद्यालये नवीनवर्षे
पठामि, मम नाम "रामदेवः" इति॥

स्वकीयं सकलजीवनं राष्ट्रस्य-
शिक्षणाय प्रचारार्थं समर्पणकर्तारः
आचार्य रामदेव महोदया आसन्।
सरलं तपस्या एवं श्रद्धया वैदिक-
ग्रन्थानां स्वाध्यायः वैदिक जीवनं
प्रति अगाध विश्वासः, इयमेव तेषां
जीवनस्य विशेषतासीत्। ते:
गुरुकुल कांगड़ी विश्वविद्यालयस्य
परिचर्यां भिन्नपदेषु स्थित्वाऽनुवर्तन्।
गुरुकुलस्य मुख्याधिकारिणस्तदा तेषाम्
परिचर्या: प्रसन्ना रत्वा मुख्याध्याप-

# देवगोष्ठी

स्य पदमलंचक्रुः। तदनन्तरमपि भवन्तः गुरुकुल सेवां न परित्यक्ता, आचार्यस्य पदं गृहीतवन्तः। भवत्सु नेतृत्व गुणान् विलोक्य भवन्तः उपकुलपति पदे नियोजिताः। भारतवर्षीय प्रायशः समस्त-विशाल नगरेषु भवन्तः भिक्षार्थं प्रति-वर्षं गच्छन्, अनेक लक्षरूप्यकाणि स्व व्याख्यानोपदेश प्रवचन योग्यता विद्वत्ता प्रभाववशात्, संचितानि कृत्वा गुरुकुल मातृचरणे समर्पितवन्तः।

गङ्गायाः जलप्लावनेन गुरुकुलस्यापार हानौ तत्रापि पुनस्तद् हरिद्वारे पूर्ववत् सुन्दरभवनेषु स्थापयित्वा तैः गौरवमनुभूतम्। इदं भवादृशस्य परम साहसिकस्य विदुषः

# देवगोष्ठी

पौरुषस्यैव कार्यमासीत् ॥

भवन्तः न केवलमस्याः संस्थाया ~~अर्थ~~ आर्थिकस्थितिमेव दृढामकुर्वन् किन्तु स्वकीयाद्वितीयवक्तृता योग्यताव्याख्यानलेखो-पदेशैश्चास्याः संस्थाया गौरवेऽभिवृद्धि-मप्यकुर्वन् ।

हरिवर्षपातालादि विदेशेभ्य आगच्छतां विदुषां हृदयेषु गुरुकुलस्य सरलजीवनस्य वैदिकसभ्यतायाः संस्कृतेश्चानिवार्यः प्रभाव आपतत् । अस्याधिकतरं श्रेयस्तु भवत एव देयमासीत् । भवन्तः स्वस्वाध्यायेन नूतन-नूतन विचारान् विद्यार्थिभ्य अददुः ।

"वैदिक मैगज़ीन" नाम्नि आंग्लभाषायाः पत्रिकायां प्रकाशितान् लेखान् पठित्वैतद्-देशीयास्तथा विदेशीया विद्वांसोऽपि विस्मिता अभवन् । युक्तिप्रमाणेभ्यश्च

# देवगोष्ठी

अपि वैदिकसिद्धान्तानां समर्थनमेवोपलभ्यते स्म ।

ततः "भारतवर्ष का इतिहास" "पुराण मतपर्यालोचन" इत्यादयोऽनेके ग्रन्थाः निर्मिताः । तेषु ग्रन्थेषु भारतवर्षस्य संस्कृतिः, सभ्यता, आदर्शः, शिक्षादीक्षा राजनीतिः, वसनम्, आचार-विचारेषु विमर्शः भारतीयदृष्टिकोणेनैव भवति । इदमेव कारणं यत् तैर्लिखितानां ग्रन्थानां विद्वत्सु दार्शनिकेषु, विचारकेषु च समादरोऽभूत् ।

भारतवर्षस्य कोऽपि समाजः नाभवत् यत्र तेषां नवीनेन विस्तारेण च भाषणेन जना लाभान्विता नाभवन् । समाजानां साप्ताहिकसत्संगात् परं कुमार-सम्मेलनात् चार्यसमाजस्य वार्षिक-

# देवगोष्ठी

महोत्सवानां प्रसंगेषु ते स्व व्याख्यानैः मनुष्येषु जागृतिं समुत्पादयन्तः, महर्षिदयानन्दस्य च अनन्यान् भक्तान् कुर्वन्ति।

ते कन्यानां शिक्षणस्यापि अति समर्थका आसन्। अत एव कन्या गुरुकुलस्य परिचर्यामपि सम्पूर्णशक्त्यानुकुर्वन्। तेषां विश्वास आसीद्यत् गुरुकुलेन दीक्षिता स्नातकाः स्नातिकाश्च बहिर्गमिष्यन्ति ते देशस्य समाजस्य सेवां करिष्यन्ति।

इत्थमाचार्यरामदेवमहोदया महर्षिदयानन्दस्य परं भक्ताः, वैदिकजीवनस्य, संस्कृतेश्च परं समर्थका आसन्। ते स्वसम्पूर्णजीवनं गुरुकुलहितायैव बुभुजिरे। एतादृशस्य परमत्यागिनो महापुरुषस्य जीवनेन राष्ट्रेणावश्यमेव शिक्षा ग्राह्या॥

विजय कुमारी नावलिया:



# देवगोष्ठी



## प्रहेलिकाः

अपदो दूरगामी च साक्षरो न च पंडितः।
अमुखः स्फुटवक्ता च यो जानाति स पंडितः॥

गोपालो नैव गोपालस्त्रिशूली नैव शंकरः।
चक्रपाणिः स नो विष्णुर्यो जानाति स पंडितः॥

अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ।
सीताहरण सामर्थ्यो न रामो न च रावणः॥

दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः।
गुणस्यूति समृद्धोऽपि परपादेन गच्छति॥

पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः।
चलते वायुवेगेन पदमेकं न गच्छति॥

सुभाषितरत्न भाण्डागारात्॥



# देवगोष्ठी

## ध्येयम्

लोके तपोधनपुनर्जननं यश्च स्यात् ,
तेजोविहीन जनता विलयो यश्च स्यात् ।
सद्ब्रह्मचर्यचरणप्रसरो यश्च स्यात् ,
एतत्तच्च गुरुकुलं विबुधा निबद्धम् ॥



सुभाषः





# देवो दयानन्दः

महर्षि दयानन्दः गुर्जर प्रान्तीय टंकारान्तर्गत मौरवी नाम्नि ग्रामे कर्षणजीवस्य भवने जन्म लेभे। अस्य जन्मकालीनं नाम मूलशंकरः इति आसीत्। मूलशंकरः शैशवादेव तीक्ष्णबुद्धि कोमल स्वभावश्च आसीत्। एनम् ध्यापयितुं कर्षणजीवः स्वगृहे एव संस्कृत शास्त्रविद्वान् पण्डितान् [illegible] अध्यापन प्रबन्धमकरोत्। अयं महर्षिः स्वगृहे एव लघुकौमुदी सिद्धान्त कौमुद्यमर कोषादि ग्रन्थान् अपठत्।

एकदा शिवरात्रि प्रकरणे अस्य पिता शिवस्य व्रतमाचरितुम् अकथयत्। अनेन पृष्टं पिता शिव

# देवगोष्ठी

व्रतस्य अनेकं महिमानमश्रृणोत् पितुर्वचने विश्वस्य
अयं शिव व्रतमकरोत् [illegible] विशेषं फलमाकर्ण्य
राजावपि बटुरयं शिवस्य व्रतं कर्तुं प्रयत्नमकरोत्।
रात्रौ व्रतं कुर्वाणः अयं शिव मन्दिरे शिव लिंगस्य
समीपे उपविशन् द्वादशवादन समये सर्वान्
पूजकान् पितरञ्च शयानानवलोक्य शिव लिंगो
परि शिव प्रसादं भुञ्जानं मूषकं च वीक्ष्य पाषाण
शिव व्रतात् विरक्तः। तस्मिन्नेव समये पितरम-
जागरयत् पितरञ्च अवदत् पितः! एतादृशस्य
शिवस्य व्रत विधाने न किमपि फलं भवितुमर्हति।
यतः यः शिवः स्वस्य आत्मनः उपरि क्रीडन्तमाखु-
मपि निवारयितुं न समर्थः सः अस्मान् विपत्तौ
रक्षेत् इत्यत्र का आशा। अतः अहमधुनैव गृहं

# देवगोष्ठी

गत्वा स्वादिष्यामि । पिता समाहूतोऽपि अयं उठात् गृहं गत्वा मातरं प्रबोध्य भोजनमकरोत् ।

तत्प्रभृति अस्य मनसि चिन्ता समुदिता केन प्रकारेण सत्यस्य शिवस्य साक्षात्कारो भवेत् । एकदा भगिन्या पितृव्यस्य च असामयिकं मरणं विलोक्य एतस्य हृदये संसारात् अत्यधिका विरक्तिर्जाता, कस्मिन्नपि कर्मणि मनः न संलग्न मभूत् । अहोरात्रं सत्यस्य शिवस्य दर्शनस्य कृते विचिन्त यतोऽस्य दिनानि व्यतीतानि अभूवन् ।

एकदा क्रमोऽपि अस्य चापित्वा गृहात् निर्गतः । गृहात् निर्गत्य साधूनां समाजे परिभ्रमणमकरोत् । परिभ्रमण समये अस्य हृदय संशयस्य निवारणे समर्थं गुरुन् कुत्रापि अनवलोक्य अयं तपश्चरितुं हिमालय प्रदेशं प्रातिष्ठत । तपस्यानन्तरं पुनः एकं विशिष्टं गुरुमन्वे- षमाणः प्रज्ञा चक्षुषः विरजानन्दस्य नाम निशम्य मथुरा

# देवगोष्ठी

नगरीं समागतः। मथुरा नगर्यामागमनात् पूर्वमेव पूर्णानन्द स्वामिना स्वनाम दयानन्दः इति अकारयत्। विरजानन्दस्य समीपे वेदादि सच्छास्त्रमधीत्य अयं संस्कृत विषये महापण्डितो जातः। अस्य गुरुः प्रकाण्ड पण्डितं मत्वा भारतवर्षे विस्तीर्णां विभिन्न मत प्रचलितां मूर्तिपूजां प्राचीन परम्परया समागतां श्राद्धादिकञ्च खण्डयितुमेनम् अवदत्। गुरुणा प्रेरितोऽयं काश्यादि प्रसिद्ध स्थानानि गत्वा महद्भिः विद्वद्भिः साकम् शास्त्रार्थं कृत्वा मूर्तिपूजायाः श्राद्धस्य मत मतान्तरस्य च खण्डनमकरोत्।

अयं मतं प्रचारयितुं सर्वप्रथमं मुम्बा नाम नगरे युगादि दिने पंच सप्तत्युत्तराष्टादशे शततमे संवत्सरे आर्य समाजस्य स्थापनां कृतवान्। गुरुकुलमुद्घाटयितुम् अनेकान् जनान् प्रेरयत्।

# देवगोष्ठी

अनेन महर्षिणा प्रेरित एव स्वामि श्रद्धानन्दो महोदयः सर्वप्रथमं कांगड़ीनाम ग्रामे गंगायास्तटे गुरुकुलमस्थापयत्। तस्य पुत्रः श्री इन्द्र विद्यावाचस्पतिरपि तेनैव महात्मना स्थापितं गुरुकुलमत्यन्तं प्रगतिं प्रापितवान्।

अनेन महर्षिणा स्त्री शिक्षा विषयेऽपि बहुप्रयत्नश्चक्रे। बाल विवाह वृद्ध विवाहयोः खण्डनमपि कृतम्। अस्यैव महर्षेः सदुपदेशं समाकर्ण्य लेखराम, गुरुदत्त, हंसराज प्रभृतयः महा सुसज्जनाः स्वजीवनं भारतीय जनतायाः उपकाराय प्रत्यर्पयन्। अयं महर्षिः अनेकान् महाराजान् कुमार्ग प्रचलितान् स्वीय संभाषणेन सन्मार्गाभिमुखान् व्यदधात्। अयं महर्षिः भारते तत्समये प्रचलिताः सर्वाः कुरीतीः अखण्डयत्। अयं सदाऽयं साधारणवेशः स्वीय वाक्‌शक्तिभिः सर्वानपि जनान् स्वाधीनानकरोत्। अयमेव महर्षिः सर्वतः प्राक् भारते हिन्दी भाषायाः प्रचारं कर्तुं प्रायतत।

# देवगोष्ठी

अयं महर्षिः परिभ्रमन् संकुर्वन् समयमवाप्य सत्यार्थप्रकाशम्
ऋग्वेदादिभाष्यभूमिकाम् आर्याभिविनयम् अन्यांश्च ग्रन्थान् व्यर-
चयत् । अस्माकं भारतीयानां दौर्भाग्यात् अनेकवारोद्भूतविपत्कः जग-
न्नाथनामा पाचकः दुष्टजनेन प्रेरितः एकदा महर्षिणे काचचूर्णं दुग्धे सम्मे-
ल्य पाययितवान् । तद्दुग्धपानात् कस्मिंश्चित्काले गच्छति अजमेर नाम
नगरे महर्षिणा स्वकं शरीरं दीपावल्याः दिवसे अत्यजत् । मृत्युसमयेऽपि
महर्षिः प्रभो! तव इच्छा पूर्णा भवतु इति वदन् मृत्युकालेऽपि आनन्दवि-
चित्रां लीलां प्रदर्शयन् प्रसन्नमुद्रायाममुं शरीरं विहाय शरीरान्तरे प्राविशत्।

सत्यार्थप्रकाशः स्वामिनः नाम अत्र लोके यावच्चन्द्रदिवाकरौ स्था-
पयितुं पर्याप्तः अस्ति । सत्यग्रन्थस्तु के ते नान्ये ग्रन्थाः तुल्याः वर्तन्ते ।

अस्मिन् कलियुगे महर्षिदयानन्देन तुल्यः अन्यः जगति
कोऽपि सज्जनः न अभवत् । अयं हिन्दीभाषायाः सुतः सेवनीयश्च
आसीत् । अस्माकम् अधुना कर्तव्यं वर्तते यत् महर्षेः अवशिष्टं कार्यं
परिपूरयितुं प्रयतनीयम् । तदैव अस्माकं जन्म सफलं भवेत् आर्यविकारे समाज
सदस्यानां मध्ये गणनीयाश्च स्याम ॥



# देवगोष्ठी





## परीक्षा

जितेन्द्र कुमारः

ननु परीक्षा का वर्तते ? यदास्माकं सम्मुखे कश्चित् प्रश्नः समागच्छति, कामं स देशस्य, मातृभूमेः, जातेः, व्यक्तेः समाजस्य वा भवेत्, वास्तविकरूपेण स एव प्रश्नोऽस्माकं परीक्षा भवति। तस्मिन् प्रश्ने साफल्यमसाफल्यं वाऽन्यद् वस्तु वर्तते। अथवा परीक्षेयमेकं मापकयन्त्रमस्ति, येन वयं केचिच्चन शारीरिकमानसिकाध्यात्मिकबौद्धिकयोग्यतानामनुमानं कुर्मः। वास्तविकरूपे सम्पूर्णजीवनमेव परीक्षायां निर्भरमस्ति। पदे पदेऽस्माकं जीवने परीक्षा भवति, येनास्माकं योग्यताऽनुमीयते। यदि वयं सूक्ष्मरूपेण विचारयेम तर्हि वयं जानीमो यदस्माकं सम्पूर्णजीवनमेव परीक्षा वर्तते, न केवलं यदा वयं परीक्षाभवने प्रश्नपत्राणि कुर्मः, स एव समयः। यतः संघर्षमयं हि जीवनम्। संसारेऽस्मिन् पदे पदे क्षणे क्षणे चास्माकं जीवने संघर्षा

# देवगोष्ठी

आगच्छन्ति, तथैव परीक्षापि। सूक्ष्मदृष्ट्या यदि सम्यग् विचारयेम तर्हि वयं ज्ञास्यामो यदस्माकं जीवने ये संघर्षा आगच्छन्ति वास्तविकरूपे ते संघर्षा एव परीक्षाः सन्ति।

अस्माकं जीवने परीक्षाया अत्यधिकं महत्त्वं वर्तते। पुरातनकाले विद्यार्थिन आचार्यमहोदयस्याश्रमे विद्याध्ययनार्थमगमन्। आचार्यमहाभागेन तदा ते आगता विद्यार्थिनः पूर्वं परीक्ष्यन्ते स्म, यदागतानां विद्यार्थिनां पठने, ब्रह्मचर्यपालने, सन्ध्यावन्दनादिकार्ये, आचरणे चाभिलाषो वर्तते न वा। यद्यस्ति, तदा स पाठं पाठयति स्म। पूर्वमेतादृशी परीक्षापद्धतिर्नासीत्, यादृशी साम्प्रतम्। तदा योग्यताधारेषु परीक्षाऽभवत्। पुरा यो ब्रह्मचारी नियमपूर्वकं विद्याध्ययनं, यथायोग्यब्रह्मचर्यादिनियमानां पालनमकरोत्, स एव परीक्षायामुत्तीर्णोऽमन्यत। अर्थात् यदा स शान्तचित्तः, जितेन्द्रियः, आचरणप्रियः, विद्वान्, समभवत् तदा स परीक्षायामुत्तीर्णोऽवबुध्यते स्म। एषा परीक्षापद्धतिरासीत्।

# देवगोष्ठी

४ परं वर्तमानकाले परीक्षापद्धतेः कस्याश्चिद्
योग्यतायाः सम्यगनुमानं कर्तुं वयं न समर्थाः।
अतो ये विद्यार्थिनो निश्चितसमयस्य मध्ये परीक्षा-
भवने उपविश्य प्रश्नपत्राणि सम्यगुत्तरन्ति, कामं ते
अनुचितोपायावलम्बनमाश्रित्योत्तीर्णा भवेयुः?
त एव विद्यार्थिनः परीक्षायामुत्तीर्णा अवबुध्यन्ते।
य उत्तीर्णा भवन्ति, तेषां योग्यतां न वीक्ष्य
तेभ्यो योग्यतायाः प्रमाणपत्रं दीयते। एषाऽऽधु-
निकी परीक्षापद्धतिः।

परं परीक्षाया अनेके लाभा अपि सन्ति।
प्रथमस्तावत् - यदा परीक्षासमयः समीपे आग-
च्छति तदा परीक्षाया भयेन त्रासेन च विद्या-
र्थिनः उत्तीर्णा भवितुं निजपाठं सम्यक् पठन्ति,
तस्य स्मरणं कुर्वन्ति च। पठनेनाऽध्ययनेन चा-
स्माकं मानसिकबौद्धिकयोग्यताया विकासो
भवति। [illegible] पठनेन ज्ञानविज्ञानस्य वृद्धि-
र्भवति। यदा च मनुष्यो ज्ञानविज्ञानयुक्तो
विद्वान् च भवति तदा तस्य समाजे प्रतिष्ठा

# देवगोष्ठी

सम्पद्येत। तस्य च ज्ञानगौरवं सर्वे जना गायन्ति।
स च भाविनि क्षेत्रे सुखेन निवसति।

परं लाभातिरिक्तं परीक्षापद्धतेरनेका हानयोऽपि सन्ति। सर्वप्रथमं परीक्षाशब्दः स्वयमेव एतावद् भयंकरशब्दो विद्यते यदस्य श्रवणमात्रेणैवानेके जना (विद्वांसोऽपि च) व्याकुली भवन्ति। द्वितीयस्तावत् परीक्षाया अयं दोषो वर्तते यदाधुनिकपरीक्षाप्रणाल्यां वर्षान्तरं परीक्षा भवति, तया परीक्षया विद्यार्थिनां योग्यता सम्यक्तया न ज्ञायते। अस्याः परीक्षायाः परिणामस्तु सर्वत्र विलोक्यते दृश्यते च, यत् ये विद्यार्थिनः परीक्षास्वनुत्तीर्णा भवन्ति ते आत्महत्यां कुर्वन्ति, इति सर्वे जानन्त्येव। परीक्षाया दिवसेष्विदं घटना समाचारपत्रेषु प्रायशः आगच्छत्येव। तृतीयस्तावत् - परीक्षाप्रणाल्यां यो विद्यार्थी पठनेऽध्ययने चावर्षं सर्वश्रेष्ठो भवति,

# देवगोष्ठी

यदि स परीक्षाभवने समुपविश्य नियतसमयस्य-
मध्येऽकस्माद् व्याकुली भवेत्, तदा तस्य
परीक्षायामनुत्तीर्णं भवितुं भयं भवति। अस्य
विपरीतमपि यो विद्यार्थी श्रेण्यां सर्वदा पठनेऽ-
ध्ययने च निर्बलो भवति, स प्रायशो दृश्यते
यदनुचितोपायानाश्रित्योत्तमाङ्कैरुत्तीर्णो
भवति। चतुर्थमिह तावदाधुनिक परीक्षा प्रणाल्यां
यदि कश्चिद् विद्यार्थी सहसा रुग्णो भवेत्
परीक्षासमये, कामं भवतु श्रेण्यां प्रथम सर्व-
श्रेष्ठः, यदि स परीक्षाभवनं न गच्छति तदा
स तस्मै वर्षाय सर्वविषयेष्वनुत्तीर्णोऽ
नुच्यते। परीक्षाप्रणाल्या अयं महान्
दोषः वर्तते।

एवमेव अनेका हानयः सन्ति

# देवगोष्ठी

अस्याः परीक्षाप्रणाल्याः परमहंसमधुना लेखि-
तुमसमर्थः।

अन्ते च वयमाशास्महे, यत्
भविष्यत्काले ऽस्माकं तन्त्रं कस्यचन वास्तविकीं
योग्यतां वीक्ष्यैव प्रमाणपत्रं दद्यात्। एषाऽऽ-
धुनिकी परीक्षापद्धति दूषिता वर्तते। यदि
वयं देशस्य, जातेः, समाजस्य च कल्याणं
कर्तुं वाञ्छेम तर्ह्यस्माकं तन्त्रं तां दूषितां
परीक्षाप्रणालीं सत्वरमेव परित्यजेत्।
तदैव भारतदेशस्य वास्तविकोन्नति-
र्भवितुमर्हति, अन्यथा न।



जितेन्द्रकुमार।

देवगोष्ठी

# विश्वविद्यालयेषु शिक्षायाः माध्यमं हिन्दी स्यात्

अयमति विवादास्पदं विषयो यदस्मिन् भारत देशे शिक्षायाः माध्यमं हिन्द्याङ्गल भाषयोः कतरत् स्यात् । यदि वयं नितपक्ष दृष्ट्या विचारयेम तर्ह्येतद् निर्णीयते यदार्य भाषया एव शिक्षाया माध्यमरूपेण भवितव्यम् । या भाषा भाषा गुणै र्विभूषिता तयैव माध्यमरूपेण भाव्यम् । हिन्द्येवास्माकं राष्ट्रभाषा मातृभाषा चास्मिन् पदे स्थातुं योग्या । अस्या भाषायाः प्रचारः प्रसारश्च सर्व क्षेत्रेषु प्रचुर मात्रायां विद्यते । विदेशीया आङ्गलभाषा अस्याः साम्यं न विधातुं शक्नोति । आङ्गलानां शासन काल एवास्या जन्म भारत भूमौ बभूव । आङ्गला अति नीतिज्ञा निपुणाश्चासन् । ते विजानन्ति स्म यद् भारतीयान् पूर्णरूपेण स्व वशे नेतुं एषां संस्कृतेः सभ्यतायाश्च सर्वथा विलोपो विधेयः ।

# देवगोष्ठी

लार्ड मैकाले महोदयेनैव यः तत्समयस्य शिक्षा
शास्त्र्यासीत्, आङ्गलभाषायाः सर्वमहाविद्यालये
एवानिवार्यरूपेण पठनं संचालितम्। तस्यैव
परिणामो यदद्यापि तद् भाषापाशेन निबद्धा वयं
अनायासेनैव न विमुक्ता भवितुं शक्नुमः। अतोऽ
स्माभिरस्या इन परित्याग एव विधेयः।
सर्वेष्वेव देशेषु निजाभाषैव भवति। तर्ह्य-
स्माकं देशे कथं विदेशीया काचिद् भाषा राज्यं
करोति? सा तु सत्वरमेव परिहरणीया। केचिदेवं
ब्रुवन्ति नानया विनाऽस्माकं सर्वमपि कार्यं सम्पन्नं
भविष्यति विदेशैश्च सम्बन्धोऽपि विलुप्तो भविष्यति
परं वयं विजानीमः यद्देशेष्वपि स्वकीयैव भाषा
समादृियते। विजयलक्ष्म्या उदाहरणस्य नास्त्या
वश्यकता। तस्याः चीदेशेऽपमानो जातः विदेशे।
अधुना वयं पश्यामो यदुत्तर प्रदेशे
तु प्रायेण महाविद्यालयेषु हिन्दी माध्यमेनैव

पठनं भवति, तत्र च किमपि काठिन्यं नानुभूयते।
यद्यपि इङ्गलिश भाषायामस्माकं महत् साहित्यं निहितं विद्यते तथाप्यस्माभिः तत्समग्रस्य साहित्यस्य स्वभाषायां रूपान्तरं विधेयम्। परिश्रमस्य त्वावश्यकता वर्तत एव। एषा खलु धारणा यदियं भाषा वैज्ञानिकी न वर्तते मिथ्यैव एव। विद्यार्थिनां कृते प्रथमतस्त्वाङ्गलभाषा कठिना विद्यते, अपतश्चेयं विदेशीया भाषा। मदनमोहनमालवीयस्य कथनमिदं यदाङ्गलभाषां सम्यग् विजानन्नप्यहं भाषणसमकाले बिभेमि यत् कुत्रचित् त्रुटिस्तु न जाता सत्यमेव विद्यते। अन्यच्च यदा अध्यापकमहोदय इङ्गलिश माध्यमेन पाठयति तदा विद्यार्थिनो मनो द्विभागयोर्विभक्तं भवति। प्रथमं तु स तस्य भाषां ज्ञातुं प्रयतते, पुनस्तेन तस्य भावो ज्ञायेत। एवमियं विदेशीया भाषा विद्यार्थिषु भार एव। बहवो विद्यार्थिनस्तु केवलं रटित्वैवोत्तीर्णा जायन्ते। एतस्या-

# देवगोष्ठी

मवस्थायां विद्यार्थिषु बलादस्यारोपणं न विधेयम्। विद्यार्थिन आङ्गलभाषां पठेयुः परं माध्यमरूपेणास्याः स्थितिर्न शोभते। हिन्दीभाषाऽति सरला मनोहारिणी च विद्यते। रूपं स्वल्पनावश्यक वर्णवर्जिता, व्याकरणदृष्ट्या निर्दोषा, अनेकगुणैः परिपूर्णा, राष्ट्रभाषा पदे नियुक्तापि कथं न योग्या? अयं तु मातृभाषायाः एषोऽपमान एव। सर्वत्र स्वभाषायामेव सर्वमपि कार्यं भवति। अन्यदेशेष्वपि हिन्दी भाषा पाठ्यते परं स्वभाषामाध्यमेनैव। एवमेवात्राप्याङ्गलभाषायाः चेत् पठनं स्यात् तर्हि स्वभाषायामेव। अत्र ये विदेशीयाः समायान्ति तेऽप्यनायासेनैवेमां ज्ञातुं पारयन्ति। केचिद् देशा एतादृशा यत्र इङ्गलिशभाषायाः स्वल्पोपि प्रयोगो न विद्यते किं तत्रास्माकं सम्बन्धो न जायते? भवत्येव। एवमन्यदेशैः सह इंगलिश भाषया विनापि नूनमस्माकं सम्बन्धो भवितुं

# देवगोष्ठी

शक्नोति। एवमाङ्ग्लानां कृते आङ्गलभाषा शोभते। हिन्दूनां कृते तु हिन्दीभाषैवोपयुक्ता। अधुना समस्येयं समुत्पद्यते, यत् चेत् प्रान्तीयभाषा एव माध्यमिकी भाषा स्यात् तर्हि को दोषः? नूनमेवमपि भवितुं शक्नोति। यमेनेनापि समस्यायाः समाधानं न भविष्यति। इदमव्यवस्थाया हेतुरेव भविष्यति। अधुना तु छात्रवर्गः पठनकाले प्रान्त परिवर्तनेपि किमपि काठिन्यं नानुभवति, यतो हि भाषाया माध्यमः प्रायेण समान एव। परं प्रान्तीयभाषायाः शिक्षाया माध्यमत्वात् इदं कर्तुं सर्वथा असम्भवमेव। कोपि प्रत्येकं प्रान्तस्य भाषां ज्ञातुं न समर्थः। इयमेव दशा अध्यापकानां कृते भविष्यति। अन्य प्रान्तं गते तत्कृते अध्यापने महत् काठिन्यं भविष्यति यतो हि तेन तु तत् प्रान्तस्य भाषा न विज्ञायते। अतः प्रान्तीय भाषापि कथमपि शिक्षाया माध्यमे नोपयुक्ता

# देवगोष्ठी

भविष्यति । अन्ते चेदमेव निर्णीयते यद् या सर्वप्रिया, सर्वश्रेष्ठा, सर्वगुणसम्पन्ना, आर्यभाषेति नाम्ना च प्रतिष्ठा सैव हिन्दीभाषास्मिन् पदे स्थातुं योग्या । नान्या काचिद् विदेशीया भाषा ।

लेखकः
वेदप्रकाशः चतुर्दशीयः



देवगोष्ठी

# महात्मा-गान्धी

सहदेवो नावमिक:

साऽल्पमूर्तिर्दययार्द्रचित्तो
दृष्ट्वा दीनार्तदशामवेक्ष्य ।
दीनोद्धृतौ यो नियतश्च यत्नी
गान्धी महात्मा सकलैः स वन्द्यः ॥

श्रीमतो गान्धिनो विषयमादाय मनाक् प्रस्तूयते । यथा नलोऽयाचितवृत्तः सञ्जातो, युधिष्ठिरोऽजातशत्रुश्च योगिजनाः आत्मारामाश्च समजनि शत सञ्जायन्ते सञ्जनिष्यन्ते, तथैवायं महाभागोऽपि महात्मेति नाम्ना प्रसिद्धं गतः । पूर्णतं नामास्य मोहनदासकर्मचन्द गान्धीत्यासीत् । अस्य महात्मनो महाभागस्य जन्म काठियावाड प्रदेशे पोरबन्दर राज्ये नवषष्टि उत्तराष्टादशशततमे, ईश्वीयवत्सरे अक्टूबर मासस्य द्वितीये दिनाङ्के अभवत् ।

# देवगोष्ठी

अयं महात्मा वर्तमानसमयस्यै-
का महती विभूतिरासीत्। अस्यैव महात्मनः
प्रतापेन भारतवर्षं स्वाधीनं समजनितरामिति। सर्वेऽ
पि विजानन्ति किमधिकाधिकेन जल्पनेन। अनेन
महात्मना देशसेवायामनेकानि वर्णनातीतानि —
कष्टानि समनुभूतानि।

अस्य महात्मनः शरीरपो-
षणम् पालनञ्च रूढिगत धार्मिक विचार परि-
पूर्णे वातावरणे बोभवीति स्म। अस्य जननी
सरलस्वभावासीत्। अस्य महाभागस्य परिवारे
जैनधर्मे दीक्षिताः सर्वे एव प्राणिन आसन्।
इदमेव प्रधानं निदानं यदस्य महात्मनो जीव-
~~केऽस्मिं~~ नेऽहिंसायाः प्रमुखस्थानमासीत्।

गांधिमहाभागस्य शिक्षाया
आरम्भः पोरबन्दरस्यैकस्मिन् विद्यालये ~~स~~
सञ्जातः, एष च महात्मा पठने लेखने
च मन्दो लज्जाशीलश्चासीत्। इयदन्तरे समुपा-
गन्ता मस्य जनको राजकोटं गतवानासीत्।

# देवगोष्ठी

तत्र चास्य शिक्षायाः सुप्रबन्धः सम्जनिष्ट । राजकोटे वर्षत्रयं यावत् अधीत्यानेन तु विद्यालये मैट्रिक परीक्षा प्रादायि । तत्र च सफलतानीता । तस्मिन्नेवावसरे त्रयोदशवर्षवयस्यस्य विवाहो जातः । जनके स्वर्गं गते सति सप्ताशीत्युत्तराष्टादश शततमे ख्रीष्टाब्देऽयं महाभागः इंग्लैण्डदेशं गतवान् । तत्र च बैरिस्टरी परीक्षामुत्तीर्य प्रत्यागतः । राजकोटमागत्य गांधिमहाभागेन वाकीलतायाः कार्यं प्रारब्धम्, परन्तु तस्मिन्कार्ये स सफलो नाऽभवत् । तस्मिन्नेवावसरे पोरबन्दरस्थेन व्यापारगृहेण वाकीलतायै दक्षिणाफ्रीकां स प्रेषितः ।

तत्र गौरांगशासनतन्त्रे गतानां भारतीयानां दुर्दशां वीक्ष्यानेन तत्रत्यशासनस्य विरोधे सत्याग्रहः प्रारब्धः, अन्तेऽस्य महाभागस्य सत्याग्रहः सफलतां गतः । यदा चतुर्दशोत्तरैकोनशततमे ईश्वीय अफ्रिकातः स भारतमागतवान् । तदा भारतीय जनता अस्य

# देवगोष्ठी

हार्दिकं स्वागतमकरोत्। अद्यापि भारतं स्वत-
न्त्रं विधातुमयं महाभागः प्रयत्नं कर्तुं
प्रारब्धवान्। प्रारम्भे बिहारप्रान्तान्तर्गत
चम्पारने कृषिकर्म कुर्वाणानां जनानां प्रश्न-
मादाय गौराङ्गानां विरोधेऽयं महाभागः
सत्याग्रहमकार्षीत् अपूर्वसफलताञ्च प्राप्त-
वान्। इत्थं समस्ते देशेऽनेकैः वारमनेकत्र
सत्याग्रहाः समजनिषत। कारागारेषु स्त्री-
पुरुषसहस्राणि लक्षाणि च प्रविष्टान्यासन्।
अस्य महाभागस्यैव प्रयत्नेन सप्तचत्वा-
रिंशदुत्तरैकोनविंशतिशततमे ईशवीय
संवत्सरे अगस्तमासस्य पञ्चदश तारिकायां
भारतं सर्वथा स्वतन्त्रमासीत्।

भारतीय स्वतन्त्रतायुद्धे हिन्दु
मुस्लिमयोरेकतामपि विधातुमनेन प्रयतितम्
परन्तु दौर्भाग्यवशाद् अस्मिन् कर्मणि
न महाभागः सफलतां न गतः। भारत-

# देवगोष्ठी

विभाजनावसरे पाकिस्ताने हिन्दुनामुपरी मुस्लिमपदवाच्यैरनेके घोरा अत्याचारा: सम्पादिता: तदापि शान्तिपाठं पाठयन्तमेनं पञ्चत्रिंशतवर्षवयस्को नाथूराम "गोडसे" नामक एको महाराष्ट्रियो नवयुवको अष्टचत्वारिंशदुत्तरैकोनविंशतिशततमे वर्षे जनवरी मासस्य त्रिंशततमे दिनाङ्के सन्ध्यासमये बिरलामन्दिरे प्रार्थनायै गच्छन्तं महाभागं पौक्षामकास्त्रेण (पिस्तौल इति हिन्दीभाषायां) अवधीरिति।

भवत्येवैवं मुनेरपि वनस्थस्य -<br>
स्वानि कर्माणि कुर्वत: ।<br>
उत्पद्यन्ते त्रय: पक्षा: -<br>
मित्रोदासीन शत्रव इति।

वस्तुतोऽस्य महाभागस्य<br>
देशतो गमनं देशाय कल्याणकारकं

# देवगोष्ठी

नाऽभवत् । किं पिष्टपेषणेनेति । शुद्ध-
बुद्धमुक्तपरमेश्वरः तस्यात्मने शान्तिं प्रद-
द्यादिति विलिख्य समाप्यते ।



देवगोष्ठी

# पत्रिका-प्रशस्तिः

सुललित सुमधुर कृतिभिश्चित्तं हरति ममेयं पत्रिका ॥

अत्र मञ्जुलाः कला लसन्ति
सरसाः कविता नवाः स्फुरन्ति
ऋतमुदारा तथा भवन्ति

हरति च पाठकचित्तं सुन्दरसूक्तिसरोजैः पत्रिका ॥१

पाठक चित्तं हरति सुलेखैः
काव्यालापैर्मधुर कथाभिः
नव्य पुरातन भव्य विचारैः

कुले सदेयं तनुते सत्साहित्यकलापं पत्रिका ॥२

रुचा सुन्दर भाव विकासं
नूतन शुभ विज्ञान विलासं
संस्कृत भाषा रम्य वितानं

कृत्वा विद्वन्मानसभवने जयति सदेयं पत्रिका ॥३

अत्र सुरसिकानां वै प्रीतिः
पत्रे पत्रे चित्रा रीतिः।

# देवगोष्ठी

धात्रोत्साह विकासो नीति -
नूतन रस पीवाह विसारे हरति मनो मे पत्रिका ॥४
मनसि सुचिरमानन्द विकासं
सुरभाषा सत्कार विलासं
कां कामिपं जयतादिह
शिव शंकर निःसीम कृपातः कुले सदेयं पत्रिका ॥५
हरीता भीता पल्लवितेयं
सदा कुसुमिता सुरभि युतेयं
रस लोलुप कवि तृप्तिकरी स्यात्
गुरुकुल बटुजन - कीर्तिपताका चारु लसन्ती पत्रिका ॥६

कोविद प्रवरः -
श्रीमान् रामनाथो वेदालङ्कारः



देवगोष्ठी

# सम्पादकीयम्

**संस्कृतस्य माहात्म्यम्** — को नाम जातिमान् पुमान् वेद सुरगिरः संस्कृत भाषायाः माहात्म्यं – 'जननी जन्म भूमिश्च स्वर्गादपि गरीयसी' इति कस्यापि कविवरेण्यस्य सुललित-वचनेन देववाण्या अत्युच्चं गौरवमयम्च स्थानं वरीवर्ति सर्वासां भाषाणां जननीत्वात्। यादृशं महत्साहित्यमस्या भाषायाः वर्तते न तादृशमन्यासां भाषाणाम्। वाल्मीकि-व्यासमाघ-कालिदास भवभूति प्रमुखैः कविवरैः विरचितानि रुचिराणि कमनीयानि महाकाव्यानि नाटकानि च गौरवमस्याः स्मारयन्ति पौनःपुन्येन। इयं भारतवासिनां प्राचीन धार्मिक साहित्यस्य संरक्षिका।

# देवगोष्ठी

ब्राह्मणसूत्रपर्थ.शास्त्रज्योतिषायुर्वेदादीनां विद्याः गीर्वाणवाण्यामेवास्यां विद्यन्ते। निखिलधर्मस्य मूलभूताः ऋग्वेदादयश्चत्वारो वेदा अपि अस्यामेव शोभन्ते।

संस्कृतस्यैतत् महत्त्वं विलोक्यैव अस्माकं सर्वकाः देवगिरः प्रचाराय प्रसाराय च निरन्तरमेव क्रियात्मकं कार्यं विदधाति। स्थाने २ संस्कृतविश्वविद्यालया निर्मीयन्ते। नगरे २ संस्कृतविद्यालयानां महाविद्यालयानाञ्च स्थापना भवन्ति।

सर्वेषु गुरुकुलेषु संस्कृतस्य प्रसारायोन्नत्यै च प्रशंसनीयं कार्यं क्रियते। गुरुकुलेष्वपि च गुरुकुल कांगड़ी विश्वविद्यालयस्य विशिष्टं स्थानं वरीवर्ति। अस्माकं सौभाग्यमस्ति यत्रागाधीयमाना वयं संस्कृतभाषा-परिचयं प्राप्नुमः।



# देवगोष्ठी

## — पत्रिका —

सहृदयाः पाठकाः – विंशतिवर्षानन्तरं संस्कृतोत्साहिनी परिषदः देवगोष्ठीति पत्रिकायाः प्रथमाङ्कं प्रकाशयितुमत्यधिकं मोदं वयमनुभवामः। आसीत् तीव्राकांक्षा यत् सम्यक्तया प्रसाधनं कृत्वा वयं प्रकाशयेम। यद्यपि सा पूर्णा न जाता तथापि योऽपि स्वल्पः प्रयासः कृतोऽस्ति स तत्र भवतां सम्मुखे वर्तते एव। अस्य प्रथमाङ्कस्योपादेयतायाः निर्णयस्तु भवद्भिरेव विधास्यते। वयमाशास्महे भवन्तः अस्याङ्कस्य समालोचनां विधाय बहुमूल्यान् परामर्शान् प्रदास्यन्ति येन द्वितीयाङ्कः इतोऽप्यधिकं परिष्कृतरूपेण प्रकाशितः स्यात्।

अत्रास्माभिः सभाया इतिहासे दृष्टिपातः करणीय एव। गुरुकुलस्थापनया सहैव संस्कृतोत्साहिनी परिषद् उद्भवो जातः। येन च त्रिंशतिवत्सरान् यावत् सततमेवोन्नतिः कृता परिषदा छात्राणां संस्कृतविषये विशेष-

# देवगोष्ठी

निकासोऽभूत् । परं तदनन्तरं अस्याः पतनम्
सञ्जातम् परिषदः । अद्यापि तु नाममात्रमेवाव-
शिष्टमासीत् । इतः वर्षद्वयं प्राक् इयं
सभा प्रायशः वाग्वर्धिन्याः आधीन्ये आसीत् ।
१९५७ खीष्टाब्दे रोहतक नगरे या संस्कृत-
भाषण प्रतियोगिताऽभूत् तत्कृते प्रशान्तकुमार-
सुभाषौ वाग्वर्धिन्या एव प्रेषितौ अस्ताम् ।
आभ्यां छात्राभ्यां विजयोपहारः पुरस्कारद्वयञ्च
विजितमासीत् । १९५८ खीष्टाब्दे इयं
सभापि स्वतन्त्राऽभूत् । तस्मिन्वर्षे सुभाष-
वेदौ रोहतकनगरे प्रेषितौ आस्तां ताभ्यां च
विजितः विजयोपहारः । तस्मिन्नेव वर्षे परिषदा
श्रद्धानन्द सप्ताहे प्रसन्नराघवस्य चतुर्थोऽङ्कः
अभिनीत आसीत् । तस्मिंश्च सुभाष वेद जगन्ना-
थवेद व्यासदिवाकरैः भागो गृहीत आसीत् ।
१९५९ तमे वर्षे पुनरपि वेदसुभाषौ रोहतक
नगरं, दिल्लीनगरं च प्रेषितौ आभ्यां एकः
विजयोपहारः पुरस्कारपञ्च विजितम् ।

# देवगोष्ठी

तस्मिन्नेव वर्षे परिषदा पञ्चदशवत्सरानन्तरम्-
अखिल भारतीय संस्कृत-संभाषण-प्रतियोगितापि
आयोजिताऽऽसीत्। एवं क्रमशः विकासो भवति

सभायाः एवं विधं विकासं
विलोक्य छात्राणामुत्साहञ्च दृष्ट्वा गुरुवर्यैः प्रीत
वर्षानन्तरं देवगोष्ठी पत्रिकां प्रकाशयामः। इदानीं
प्रतिपक्षं सभा अधिवेशनं भवति। अस्मिन्वर्षे नवः अङ्कस्तु
अवश्यमेव प्रकाशितो भविष्यतीत्येवास्माकं सुदृढो
निश्चयः, श्रद्धानन्द सप्ताहे प्रतियोगितया सह
किमपि नाटकमपि सुनिश्चितमेव अभिनीतं
भविष्यति।

आगामिनि विजयदशमी पर्वणि
प्रतियोगिताद्वयस्य आयोजनमस्माभिः क्रियते
तस्मिन्नेव भवन्तः ज्ञास्यन्ति अस्माकं प्रयत्नं
छात्राणाञ्चोत्साहम्।



## — धन्यवादाः —

अन्ते चाहं वयं गुरूणां चरणेषु धन्यवादान् अर्पयामः। यैः प्रेरिता वयं संस्कृतोन्नतिं प्रतिकृतसंकल्पाः स्म। विशेषतश्चाहं धन्यवादं करोमि श्रीमतां पूज्यचरणानां धर्मदेव वेदवाचस्पति महोदयानां यैर्हि स्वानुभवान् परामर्शान् देवगोष्ठी विषये श्लोकान् लेखञ्च दत्वा सुविशेषं वयमनुगृहीताः स्म। आशास्महे तेषां सहयोगोऽस्माकं सदैव पथप्रदर्शनं विधास्यति। एतदतिरिक्तं श्रीमतां हरगोपाल महोदयानां, कोविद प्रवराणां धर्मदेव विद्यामार्तण्ड महोदयानां, श्रीमतां मनमोहन महोदयानाञ्च वयं तेषां सहयोग कारणात् विशेषं धन्यवादान् दद्मः। इन्द्र प्रकाशचन्द्र महोदयोऽपि धन्यवादं न विस्मरणीयः।

वयं लेखकानां सकल छात्राणां अपि धन्यवादं कुर्मः। छात्रेषु सर्वाधिक साहाय्यं एकादशश्रेण्याश्छात्रेण महावीरेण दत्तं अतस्तत्कृते पौनःपुण्येन धन्यवादान् दद्मः।

# देवगोष्ठी

आशास्महे यदस्माकं प्रयासस्य स्वागतं कृत्वा भवन्तः सर्वे उत्साहमस्माकं वर्धयिष्यन्तीति । आशास्महे पर गुरुवर्या मार्गप्रदर्शनैरस्माकं सहयोगं करिष्यन्ती पलमति विस्तरेण ॥

देवगोष्ठी

# सम्मतयः

देववाणी प्रख्याते ऽस्मिन् गुरुकुले विंशतिवर्ष-
पर्यन्तं संस्कृतपत्रिकायाः अभाव आसीदित्यनुभवं
नितरां खेदमनुभवामि। चिरादारब्धस्य मनागव्याहतत-
विलुप्तिं गतवति बृहस्पतिभिः देवगोष्ठी पत्रिकायाः
सम्पादनभारस्य स्वीकारेण किञ्चित्सन्तुष्यत्यपि मे
चेतः। पत्रिकायामस्यां सम्पादितं देवगोष्ठ्यां तत्सुरुचि-
पूर्णं सुन्दरं च वर्तते। अस्याः पत्रिकायाः लेखकैः गुरुकुल-
पत्रिकायां स्वलेखानि प्रकाशनाय प्रेषणीयानीत्यपि
मे परामर्शः। उद्देश्यमिदमवलम्ब्य गुरुकुलपत्रिकायाः
प्रकाशनमभूदपि, संस्कृतभाषायां प्रारब्धम्। देवगोष्ठ्याः
उपक्रमः अग्रेऽपि प्रगतिपथगामी स्यादित्यस्ति मे हार्दिका-
भिलाषा।

सत्यव्रतः

२२-८-६०

# देवगोष्ठी

साधु प्रयतितम्। देवगोष्ठी सादि समध्यं सान्तञ्च सम्यक् पठिता मया। साधुवादमर्हतितमां सम्पादकः। शुभाशिषः। जनमेजयः विद्यालंकारः

गुरुकुल कांगड़ी विश्वविद्यालयः - २४-९-'६०.

श्रीमान् - जनमेजयो विद्यालंकारः

# देवगोष्ठी

यदा वयं गुरुकुले स्म तदा संस्कृत हिन्दी आंग्लभाषा-
मयी पत्रिका प्रकाश्यते स्म। तत्र द्वारा
मम चित्रं रुचिं प्रदर्शयन्ति स्म। अद्य अवकाश-
वर्षानन्तरं अहं गुरुकुल द्वारा प्रकाशितां
देवगोष्ठी पत्रिकां दृष्टवानस्मि। यां दृष्ट्वा अत्यन्तं
आह्लादो जातः। एतत्कृते च ब्रह्मचारिण्यः
साधुवादार्हाः सन्ति। आशासे अग्रे विविध
ब्रह्मचारिणः इतोऽप्यधिकं रुचिं प्रदर्शयिष्य-
न्ति।

यशपाल सिद्धान्तालङ्कार
१ ८/८०
मुख्य अधिष्ठाता कन्या
गुरुकुल देहरादून

## देवगोष्ठी

# समाचार-समीक्षा

गुरुकुल समाचार: गुरुकुले चिरकालानन्तरं **विश्व-विद्यालय-व्याख्यान मालाया** आयोजनं कृत्वा, अत्यधिकं प्रशंसनीयं कार्यं कृतमस्माकं पूज्यै-राचार्यवर्यैः। विश्वविद्यालयस्य लाभ एवायं यदत्र सर्वविषयेषु छात्राणां प्रवेशो जायते। अत्रास्माकं परामर्शोऽस्ति छात्राणां कृते यत् एतादृशानि विविधविषयकाणि भाषणानि श्रुत्वा लाभं प्राप्नुयुः। भाषणविषये चास्माकं मतं यत्तानि सामान्यहिताय स्युः॥

## — आश्रमस्थ-सभानां कार्यम् —

अस्मिन्वर्षे सर्वासामाश्रमस्य सभानां कार्यं प्रशंसनीयं वर्तते। प्रतिशनि-वासरं वाग्वर्धिन्याः सभायाः कोऽपि कार्यक्रमो

# देवगोष्ठी

अवश्यमेव भवति। संस्कृतोत्साहिनीपरिषद्, "इंगलिशलिटरेरी" इत्यादयाश्चापि प्रतिपक्षं कार्यक्रमा भवन्ति। एतैः कार्यक्रमैः छात्राणां भाषणशक्ते र्विकासः सततं भवत्येव।

## ← गुरुकुल-पत्रिका →

गुरुकुल पत्रिकाया: हिन्द्या देववाण्यां रूपान्तरमपि प्रशस्यं वर्तते। अस्मिन्समये भारतसर्वकारोऽपि संस्कृतस्य महत्वं विज्ञाय तस्य प्रचारदिशायां साधु-प्रयत्नं नितान्तमेव करोति। गीर्वाणवाणी-प्रचारे इयमस्माकं गुरुकुलपत्रिकापि प्रशंसनीयं साहाय्यं प्रदास्यतीत्याशास्महे।

## — शोकसमाचारः —

गतागस्तमासस्य त्रिविंशति-थौ गुरुकुलस्य सर्वप्रथमस्य प्रतिष्ठितस्नातकस्य राजनीतिनिष्णातस्य, महासाहित्यकारस्य, गुरुकुलमातृभक्तस्य, उपकुलपतेः श्रीमतः इन्द्रविद्यावाचस्पति महो-

दयस्य देहान्तोऽभूत् । तस्मै महापुरुषाय श्रद्धाञ्जलीनर्पयन्तो वयं प्रार्थयामहे भगवन्तं यत्तस्य आत्मा स्वर्गेऽपि शान्तिं प्राप्नुयात्, अस्माकं कं शिष्याणां सुविमलानि चरितानि विलोक्य ।

## विश्व-दर्शनम्

**नवप्रान्तः**

गतमासे भारते एकस्य नवस्य प्रान्तस्य स्थापनाऽभूत् योहि "नागालैण्ड"नाम्ना ख्यातः । शान्ति स्थापनाय कृतोऽयं भारतस्य सर्वकारस्य प्रयत्नः प्रशंसनीय एव ।

## पशूनामन्तरिक्ष-यात्रा

गतमासे जगत्प्रसिद्धेन रूस-देशेनान्तरिक्षे स्वकीयं राकेट यन्त्रं प्रेषितं यस्मिन् कुक्कुरादय प्राणिन आसन् । विज्ञानस्यायं चमत्कारः केन चमत्क्रियते ।

# देवगोष्ठी

## ← सन्धिः →

अस्य मासस्य एकोनविंशतितिथौ भारतस्य पाकिस्तान-देशेन सह कुल्यानां नदीनाञ्च जलस्य-विषये सन्धिरभूत् । ~~सन्धि~~ तदनुसारं भारतं एकनिश्चितमवधिं यावत् पाकिस्तान देशाय स्वनदीनां जलं प्रदास्यति । यदा स कुल्यानां निर्माणं करिष्यति तदा त्रिषु नदीषु अस्माकमेव अधिकारो भविष्यति ।

## — निःशस्त्रीकरण वार्ता —

अस्मिन्समये संयुक्तराष्ट्रसङ्घे निःशस्त्रीकरणप्रश्न विषये विवादः प्रचलति । रूसादि देशानां प्रधानमन्त्रिणः समागताः ।

## — रोमदेशे विशालक्रीडाङ्गनम —

रोमदेशे ओलम्पिक क्रीडाः समाप्ता जाताः नवति प्रायैः देशैः भागो गृहीतः आसीत् । रूसदेशेन सर्वाधिकानि स्वर्णपदकानि (त्रिचत्वारिंशत्) विजितानि । अमेरीका देशस्य इटलीदेशस्य च क्रमशः द्वितीयं त्रितीयं

# देवगोष्ठी

च स्थानमासीत् । शोचनीयासीत् भारतदेशस्य दशा दौर्भाग्यमस्माकं भारतीयानां यत् इतः ब्रिटिश इत्सरान् यावदस्माकं देशः हाकी क्रीडायां विश्वविजयी आसीत् । यस्मिन्वर्षे गतं स्वर्णपदकं पाकिस्तान देशं प्रति । एकं रजतपदकमेव विजितं भारतेन ।

अत्र विषयेऽस्माकं परामर्शो वर्तते यत् भारतसर्वकारस्य कर्तव्यमस्ति यत् स क्रीडा क्षेत्रे उन्नतिं कर्तुं क्रीडकानां शिक्षणाय अधिकाधिकं व्ययं कुर्यात् येन वयमपि अन्येषां देशानां पुरतः स्थातुं समर्था भवेम । हाकी-क्रीडा विषये त्वस्माकं सम्मतिरस्ति, अस्मात् वत्सरादेव पञ्चविंशति क्रीडकानां निर्वाचनं विधाय तेषां सततमभ्यासं कारयेत्, येन आगामिनि वत्सरे "मकसी" नगरे वयं पुनः स्वप्रतिष्ठितं स्थानं प्राप्नुयाम । जापानराजधान्याः "टोक्यो" नगरस्य ओलम्पिक क्रीडायां च पुनः अस्माकं देशो विश्वविजयी भवेत् इत्यलं विस्तरेण ॥

— ब्रजेशकुमारः —

